No share prices,
no political fortunes, yet...

# Over 40% of Heritage readers are professionals or executives, 61% from households with a professional / executive as the chief wage earner. Half hold a postgraduate degree or a professional diploma.

– from an IMRB survey conducted in Oct. 1986




It's an unusual magazine. It has a vision for today and tomorrow.

It features ancient cities and contemporary fiction, culture and scientific developments, instead of filmstar interviews and political gossip. And it has found a growing readership, an IMRB survey reveals. Professionals, executives and their families are reading The Heritage in depth – 40% from cover to cover, 42% more than half the magazine.

More than 80% of The Heritage readers are reading an issue more than once.

And over 90% are slowly building their own Heritage collection.

Isn't it time you discovered why?



# THE HERITAGE



CMP-2155

**So much in store, month after month.**

कविहृदयम्–

# धनं गौणं, तृप्तिः प्रधाना

**वयम् इह परितुष्टाः वल्कलैः, त्वं दुकूलैः**
**सम इह परितोषो, निर्विशेषो विशेषः।**
**स तु भवति दरिद्रो यस्य तृष्णा विशाला**
**मनसि च परितुष्टे कोऽर्थवान्, को दरिद्रः!**

कविः भर्तृहरिः स्वकीये वैराग्यशतके एवं वदति- "भवान् धनिकः स्यात्। उत्तमानि वस्त्राणि धरन् भोगसाधनैः जीवनं यापयन् स्यात्। मादृशाः वल्कलं धारयन्तः यत् लब्धं तेन जीवन्तः स्युः। एवं तर्हि आवयोः कः भेदः? न कोऽपि। जीवने परितोषः एव प्रधानः। वयं वल्कलैः तुष्टाः। भवान् उत्तमैः वस्त्रैः तुष्यति। एवं साधनं भिन्नं चेदपि परितोषः तु समानः खलु? अतः एव आवयोः मध्ये भेदः नास्ति।

वस्तुतः तु धनस्य स्थितिः राहित्यं वा दारिद्र्यस्य कारणं न। यस्य तृष्णा अधिका, सः धनी वा निर्धनी वा भवतु, दरिद्रः एव। यस्य च तृष्णा सर्वथा शान्ता, सः धनवान् निर्धनः वा भवतु, अर्थवान्। अतः जीवने धनं गौणं, तृप्तिः प्रधाना" इति।

अस्माकं देशे एतत् तत्त्वं न केवलम् उपदेशे, अपि तु आचारे अपि आसीत्। निर्लोलुपता अल्पतृप्तता इत्यादयः गुणाः जनानां जीवने ओतप्रोततया सम्बद्धाः आसन्। सामान्याः ग्रामीणाः अक्षरम् अजानन्तः अपि एतत् तत्त्वं स्वव्यवहारे आनीतवन्तः आसन्। अतः एव तेषां जीवनम् उदात्तं, समृद्धं च आसीत्।

इदानीम् अपि एतादृशाः न सन्तीति न। विरलतया वा तत्र तत्र सन्ति एव, किन्तु पत्रान्तरितानि फलानि इव। एतादृशाः सन्ति इत्यत एव लोकः जीवति। प्रातः स्मरणीयाः ते। अभिवन्दनीयाः ते। अनुकरणीयाः ते। नमो महद्भ्यः!



जिज्ञासा –

# महाकार्यं, मातापितरौ इ.

शिष्य:- श्रीमन्, महत्कार्यम् इति रूपं साधु, उत महाकार्यम् इति?

आचार्य:-महत् कार्यम् इत्यत्र व्यस्तः प्रयोगः। कार्यस्य विशेषणं भवति महच्छब्दः। महाकार्यम् इति तु समस्तं रूपम्। अतः उभयत्र अपि साधुत्वम् अस्ति एव।

शि- 'महत् कार्यम्' इति व्यस्तस्य प्रयोगस्य साधुत्वम् अस्ति इति अहम् अपि जानामि। समस्ते प्रयोगे कथम् इति...।

आ- 'महाकार्यम्' इत्यत्र कः समासः इति वदतु प्रथमम्।

शि- 'महत् च तत् कार्यम् च' इति विग्रहः। महत्-कार्ययोः समान-विभक्तिकत्व विशेषणविशेष्यभावः च अस्ति। अतः कर्मधारयसमासः।

आ- विभक्तिप्रत्ययलोपादिसोपानानि वदतु तावत्।

शि- महत् + कार्यम् .... I

महत् (प्रथमा = सु) + कार्य (प्रथमा = सु) .... II

महत् (~~प्रथमा = सु~~) + कार्य (~~प्रथमा = सु~~) ....III

आ- तिष्ठतु तावत्। कर्मधारयसमासे पूर्वपदत्वेन स्थितस्य महच्छब्दस्य तकारस्थाने आकारः भवति*। 'महा' इति रूपं सिध्यति च।

शि- तदा 'महाकार्यम्' इति रूपं सिध्यति। एवं तर्हि महत्कार्यम् इति समस्तं रूपं न भवति?

आ- न भवति इति तु, कर्मधारयसमासे। तत्पुरुषे तु भवति एव। महतः (महापुरुषस्य) कार्यम् इति विग्रहः तत्र।

शि- एवं तर्हि सारः एवं वक्तुं शक्यते–

---

* आन्महतः समानाधिकरण-जातीययोः - पाणिनि सूत्रम्।

* महाकार्यम् – कर्मधारयसमासः। (महत् च तत् कार्यं च इति विग्रहः।)

* महत्कार्यम् – षष्ठीतत्पुरुषसमासः। (महतः कार्यम् इति विग्रहः।)

* महत् कार्यम् – भिन्नं पदम्। (तयोः शब्दयोः समासः न कृतः इत्यर्थः।)

आ- आं, विषयः सम्यक् अवगतः भवता।

शि- श्रीमन्, अन्यः कश्चन सशंयः। मातापितरौ इत्यत्र कथं पूर्वपदस्य आकारः? वस्तुतः तु मातृपितरौ इति भवेत् खलु? पूर्वपदस्य विभक्तिलोपे कृते 'मातृ' इति किल प्रातिपदिकम्?

आ- द्वन्द्वसमासे यत्र रक्तसम्बन्धः विद्यासम्बन्धः वा दृश्यते तत्र ऋकारान्तस्य पूर्वपदस्य ऋकारान्ते शब्दे परे आकारान्तत्वम्*।

शि- एवं वा? तदा सोपानानि एवं भवन्ति खलु?

माता + पिता .... I

मातृ (प्रथमा = सु) + पितृ (प्रथमा = सु) .... II

मातृ (~~प्रथमा = सु~~) + पितृ (~~प्रथमा = सु~~) ....III

पूर्वपदे स्थितस्य ऋकारस्य आकारः। तदा मातापितरौ इति रूपं सिध्यति। आचार्य! किन्तु मया मातापुत्रौ पितापुत्र्यौ इत्यादीनि उदाहरणानि अपि दृष्टानि। तत्र ऋकारान्तस्य पदस्य परत्वं नास्ति खलु?

आ- पुत्रशब्दस्य विशेषविधानम् अस्ति। अतः ऋकारान्ते शब्दे परे, पुत्रशब्दे (पुत्रीशब्दे च) परे च पूर्वपदस्थस्य ऋकारस्य आकारः भवति।

शि- एतत् केवलं द्वन्द्वसमासे एव खलु?

आ- आम्। मातुः गृहम् = मातृगृहम्, मातुः सम्बन्धः = मातृसम्बन्धः इत्यादिषु तत्पुरुषादिस्थलेषु पूर्वपदस्थस्य ऋकारस्य न आकारः।

---

* आनङ् ऋतो द्वन्द्वे – पाणिनिसूत्रम्।



# चन्दमामा

सप्टम्बर्-१९८७

*

## अन्तरङ्गम्


| | | | |
|---|---|---|---|
| रसवार्ता: | .... ९ | अदृष्टशाली | .... ३९ |
| राज्ञी क्षेमा | .... १० | उत्तररामायणम् | .... ४३ |
| राजभक्तिः | .... ११ | क्लेषकरी चिकित्सा | .... ५१ |
| ज्ञानार्थं वादः | .... १६ | वाणिज्यं स्नेहः च | .... ५२ |
| ज्वालाद्वीपः | .... १९ | प्रत्युपकारः | .... ५५ |
| धैर्यशाली | .... २७ | चतुरमतिः | .... ६० |
| निर्णयकौशलम् | .... ३३ | प्रकृतिवैचित्र्याणि | .... ६३ |
| अम्बरदुर्गम् | .... ३५ | चित्रशीर्षकास्पर्धा | .... ६५ |


*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००

# चन्दमामा

संस्थापकः- **'चक्रपाणिः'** सञ्चालकः- **'नागिरेड्डी'**

संस्कृतेन सम्भाषणं करणीयम् इति विषयं यदा प्रस्तुतीकुर्मः तदा सर्वे संस्कृतज्ञाः सहर्षम् अङ्गीकुर्वन्ति। केचन तु संस्कृतेन सम्भाषणं करणीयम् एव इति घण्टाघोषं वदन्तः परोपदेशपाण्डित्यं प्रदर्शयन्ति।

किन्तु क्षणकालानन्तरं यदा अन्यः संस्कृतज्ञः मिलति तदा तेन सह प्रान्तीयभाषया व्यवहारम् आरभन्ते! 'संस्कृतेन सम्भाषणार्थम् अन्यः संस्कृतज्ञः मम प्रदेशे नास्ति' इति ये व्याजं वदन्ति ते संस्कृतज्ञे मिलिते अपि 'संस्कृतेन सम्भाषणं करणीयम्' इति अंशम् एव विस्मरन्ति। किमर्थम् एवं भवति?

सम्भाषणं करणीयं, संस्कृतार्थं समयः दातव्यः इत्यादीन् अंशान् सामान्यतः बुद्धिः अङ्गीकरोति, न तु हृदयम्। हृदयेन अङ्गीकृतं चेदेव अङ्गीकृतं तत्त्वं व्यवहारे आगच्छति। केवलं बुद्ध्या अङ्गीकृतः विषयः प्रायः व्यवहारे न आगच्छति।

अतः संस्कृतेन सम्भाषणं करणीयम् इति अंशम् अस्माकं हृदयम् अङ्गीकुर्यात्। सङ्कल्पदृढता, समयदानं, व्रतनिष्ठता इत्यादयः अंशाः स्वव्यवहारे आनेतव्याः। संस्कृतेन सम्भाषणम् इत्येतत् संस्कृतज्ञस्य मम कर्तव्यम् इत्ययम् अंशः सदा स्मर्तव्यः।

सम्पुटः- ४ सप्टम्बर् - ८७ सञ्चिका- ६

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००



रसप्रश्नाः

# सीतापरिणयः

[ विश्वामित्रयागरक्षणानन्तरं मिथिलागमनतः आरभ्य सीतापरिणयं समाप्य अयोध्यां प्रति आगमनपर्यन्तस्य कथाभागस्य आधारेण सज्जीकृताः केचन प्रश्नाः अधः उल्लिखिताः सन्ति। उत्तररूपेण विकल्पत्रयं सूचितम् अपि अस्ति। युक्तम् उत्तरं जानन्तु ]

I विश्वामित्रयागस्य रक्षणकार्यं समाप्य मिथिलां प्रति प्रस्थितः रामः कस्याः पुण्यनद्याः कथां श्रुतवान्?

१. सरयूनद्याः। २. तमसानद्याः। ३. गङ्गानद्याः।

II मिथिलागमनमार्गे अहल्यायाः शापविमोचनं यत् अभवत् तत् कुत्र प्रवृत्तम्?

१. गौतमाश्रमस्य पुरतः। २. गौतमाश्रमे। ३. गौतमाश्रमसमीपे मार्गे।

III मिथिला कस्य देशस्य राजधानी?

१. विदेहस्य। २. कोसलस्य। ३. मगधस्य।

IV रामेण यत् शिवधनुः भञ्जितं तस्य नाम किम्?

१. शार्ङ्गम्। २. शुनाभः। ३. शिवधनुः इत्येव।

V रामः शिवधनुषः भङ्गं कस्मिन् सन्दर्भे कृतवान्?

१. स्वयंवरसन्दर्भे। २. जनकदर्शनानन्तरम्। ३. पूर्णायां राजसभायाम्।

VI भरतशत्रुघ्नयोः पत्न्योः माण्डवि-श्रुतकीर्त्योः पितुः नाम किम्?

१. जनकः। २. कुशध्वजः। ३. कुशनाभः।

VII रामः बाणप्रयोगेण परशुरामस्य किं सामर्थ्यं नाशितवान्?

१. तपःशक्तिम्। २. पादयोः कामगमनशक्तिम्। ३. समग्रं शरीरबलम्।

उत्तराणि—

I-३. II-२. III-१. IV-२. V-२. VI-२. VII-१.

## रसवार्ता:



### पुष्पसङ्गीतम्!

पुष्पैः प्रसार्यमाणानि सूक्ष्मानि कम्पनानि सङ्गीतरूपेण परिवर्तयितुं कञ्चन क्रमम् अन्विष्टवन्तः सन्ति जपानदेशीयाः केचन महाविज्ञानिनः। 'प्रयोगस्तरे विद्यमानः एषः प्रयत्नः सद्यः एव कार्यान्वितः भवेत्' इति प्रयतमानाः सन्ति ते।

### विंशतिभाषात्मकः शब्दकोषः

हङ्गरीदेशस्य 'इण्टरनेषनल् कौन्सिल् आफ् म्यूजियालजी' संस्थया, २७ देशीयानां १०० पण्डितानां साहाय्येन दशवर्षात्मकस्य प्रयत्नस्य फलरूपेण वस्तु-प्रदर्शनशालासम्बन्धी विंशतिभाषात्मकः शब्दकोषः कश्चन सज्जीकृतः अस्ति।






### पक्षिसमूहस्य मरणम्!

महाराष्ट्रराज्ये थानामण्डले मुराबाद्नामके उपमण्डले ७०० सहस्राङ्गुलोन्नतस्य 'माल् षेड् घाट्' नामकस्य पर्वतस्य शिखरे एकः खातः अस्ति। प्रतिवर्षं तत्र हिममयः झंझावातः कांश्चन सप्ताहान् यावत् वाति। एतत्कारणतः तत्रत्याः पक्षिणः समूहरूपेण मृताः भवन्ति।

### विस्मृतप्रायः वीरः

डा ॥ नेजार्मिंगमहोदयस्य पुत्रः बेर्ग्सिंग् द्वितीये प्रपञ्च-महायुद्धे लिथुयानिया प्रदेशे नाजीदुराक्रमणं विरुध्य युद्धं कुर्वन् वीरोचितं मरणं प्राप्तवान्। एषु दिनेषु केचन मार्हमिनः शालाबालकाः तस्य शवस्थानम् अन्विष्टवन्तः। तस्य वीरस्य पत्नी इदानीं रशियादेशे उज्बेकिस्थाननगरे निवसति इति श्रूयते।



# राज्ञी क्षेमा

शाकलराज्यस्य राज्ञी क्षेमा अनुपमसुन्दरी। स्वसौन्दर्यविषये तस्याः विशेषाभिमानः। एतत्कारणतः सा गर्वेण व्यवहरति स्म अपि।

राजा बुद्धस्य उपदेशं श्रुत्वा तदीयशिष्यताम् अङ्गीकृतवान्। राज्ञी अपि बुद्धस्य दर्शनं करोति चेत् उचितं भवेत् इति महाराजस्य इच्छा। किन्तु एतत् राज्ञी क्षेमा न अङ्गीकरोति। बुद्धस्य विषये तस्याः अनादरः इति न। 'बुद्धः बाह्यसौन्दर्यं क्षुल्लकं गणयति' इति सा श्रुतवती आसीत्। अतः सः अनादरं प्रदर्शयेत् इति तस्याः आतङ्कः।

एकदा राजसभायाम् उपस्थितः आस्थानकविः राजोद्यानस्य वेणुवनस्य वसन्तशोभां वर्णयन् कानिचन पद्यानि श्रावितवान्।

एतत् रमणीयं वर्णनं श्रुत्वा सौन्दर्याभिमानिनी क्षेमा वेणुवनं द्रष्टुम् अपेक्षितवती। तद्दिने एव तदर्थं प्रस्थितवती च।

तत्समये बुद्धः वेणुवने एव आसीत्। सः वृक्षस्य शीतलच्छायायां विश्रान्तिम् अनुभवन् आसीत्। राज्ञी क्षेमा एतं विषयं न जानाति।

बुद्धस्य पार्श्वे स्थित्वा नवयौवनवती सुन्दरी काचित् वायुं वीजयन्ती आसीत्। एतत् दृश्यं दृष्ट्वा आश्चर्यम् अनुभवन्ती राज्ञी समीपं गतवती। यथा यथा सा समीपम् आगतवती तथा तथा वायुवीजनरतायाः सुन्दर्याः सौन्दर्यं क्षीयमाणं जातम्। केशाः पलिताः। दन्ताः निर्गताः। चर्म शिथिलं जातम्। इदानीं तत्र काचित् वृद्धा स्थिता दृश्यते।

सेवारतायाः अप्सरसः द्वारा बुद्धः 'यौवनं क्षणिकम्' इति त्रैकालिकसत्यं प्रत्यक्षं प्रदर्शितवान् आसीत्। समीपम् आगतां क्षेमां बुद्धः- 'शाश्वतसुखदायकम् अन्तरङ्गसौन्दर्यं कीदृशं भवति, धर्मेण जीवनं कथम्' इत्यादिकं सविवरणं बोधितवान्। क्षेमायाः गर्वः निर्गतः। सा बुद्धं भक्त्या प्रणम्य तदीयं शिष्यत्वम् अङ्गीकृतवती।





# राजभक्तिः

प्राचीनकाले ताराचन्द्रः नाम राजा अनङ्गदेशं परिपालयन् आसीत्। तस्य उभौ पुत्रौ। ज्येष्टः चन्द्रापीडः, अन्यः तारापीडः। यदा ताराचन्द्रः वार्धक्यकारणतः दिवङ्गतः तदा तौ कुमारौ प्राप्तवयस्कौ आस्ताम्।

पितुः मरणानन्तरं ज्येष्ठः चन्द्रापीडः अनङ्गदेशस्य राजा जातः। अनुजः तारापीडः लक्ष्मणः इव अग्रजस्य अनुवर्ती आसीत्। राज्यपालने साहाय्यं कुर्वन् तारापीडः चन्द्रापीडस्य दक्षिणः भुजः इव आचरति स्म। सहोदरयोः अन्योन्यतां दृष्ट्वा सर्वे आश्चर्यचकिताः भवन्ति स्म- कलियुगे अपि एतादृशाः सन्ति खलु इति।

चन्द्रापीडः आदिनं राजकार्ये व्यग्रः भवति। सायङ्काले मनोविनोदार्थं राजभवन- समीपस्थे उद्याने एकान्ते किञ्चित्कालम् उपविशति च। तादृशे सन्दर्भे मुख्यं कार्यं यदि स्यात् तर्हि तारापीडः तत्र आगच्छति, अग्रजेन सह विचारविमर्शं कृत्वा निर्गच्छति च।

एकदा चन्द्रापीडः अनुजं तारापीडं समीपस्थं चम्पकराज्यं प्रति कार्यनिमित्तं प्रेषितवान्। तद्दिने यथापूर्वम् आदिनं कार्यं कृत्वा विश्रान्त्यर्थं सः राजोद्यानं गतवान्। तत्समये एका आकस्मिकी घटना प्रवृत्ता।

सूर्यास्तानन्तरम् अपि चन्द्रापीडः एकान्ते चिन्तनमग्नः आसीत्। यदा अन्धकारः सर्वत्र व्याप्तः तदा सः प्रासादं प्रति प्रस्थितवान्। तदा कस्मात् अपि गुल्मात् आहारान्वेषणार्थम् आगतः सर्पः महाराजेन पादेन स्पृष्टः। तेन कुपितः सः सर्पः महाराजं दष्ट्वा कुत्रापि निलीनः अभवत्।

सर्पदंशनेन चन्द्रापीडः वेदनया उच्चैः आक्रन्दनं कृत्वा अधः पतितवान्। एतत्

करुणक्रन्दनं श्रुत्वा धावन्तः आगत्य भटाः महाराजम् अन्तःपुरं प्रति नीतवन्तः। आस्थानवैद्यः त्वरया आनीतः। चिकित्सा अपि आरब्धा।

आस्थानवैद्यस्य समयोचितचिकित्सया महाराजस्य मरणं तु निवारितं, किन्तु सम्भाषणशक्तिः लुप्ता जाता। हस्तौ पादौ च क्रियाहीनौ जातौ।

उद्याने इतः पूर्वं सर्पः कदापि न दृष्टः आसीत्। अतः जनाः सन्देहेन परस्परं वदन्ति स्म यत् राजहत्यार्थं केनापि कुतन्त्रम् आश्रितं स्यात् वा? इति। केषाञ्चित् जनानाम् एतानि सन्देहवचनाानि मन्त्री श्रुतवान्।

मन्त्री एतादृशं सदवकाशं प्रतीक्षमाणः आसीत्। सः राजवंशम् उन्मूलयितुम् इच्छति स्म। यदा ताराचन्द्रः दिवङ्गतः तदारभ्य 'केनापि उपायेन सिंहासनं वशीकरणीयम्' इति चिन्तयन् आसीत् सः। इदानीं तेन उत्तमः अवकाशः प्राप्तः। राजा निश्चलस्थितौ सम्भाषणासमर्थः अस्ति। अनुजः तु राज्यात् बहिः अस्ति।

'एतत्सन्दर्भे कथञ्चित् युवराजः तारापीडः नाशितः चेत् विनायासं सिंहासनं मम वशे आगच्छति। शक्तिहीनस्य महाराजस्य समापनं न क्लेशाय' इति दुरालोचनं कृतवान् मन्त्री।

एतदनुगुणं सः एकं तन्त्रं निर्मितवान्। सः जनान् वदति स्म- "महाराजः अकस्मात् सर्पेण यत् दष्टः तत्र किमपि कुतन्त्रम् अस्ति इति मम अभिप्रायः। दिनद्वयाभ्यन्तरे



वस्तुस्थितिं प्रकटीकरिष्यामि। महाराजस्य दैनन्दिनव्यवहारम् उद्यानगमनादिकं यः सम्यक् जानाति तेनैव एतत् कृतम् इति तु निश्चितम् एव। दिनद्वयाभ्यन्तरे साक्षिपुरस्सरम् अपराधिनम् अन्विष्य शूले आरोपयिष्यामि" इति।

चम्पकदेशे स्थितः तारापीडः 'अग्रजः सर्पदंशनेन मृतः' इति वार्तां श्रुतवान्। सः दुःखितः दिग्भ्रान्तः च सन् राजधानीं प्रत्यागतवान्। चन्द्रापीडस्य चिकित्सार्थम् उत्तमां व्यवस्थाम् उपकल्पितवान्। अनन्तरं राज्यस्य व्यवहारसूत्रं स्वहस्ते स्वीकृतवान्।

अत्रान्तरे मन्त्री विश्वासार्ह-भटद्वारा प्रसिद्धम् अहितुण्डिकं स्वसमीपम् आहूतवान्। तं रहसि उक्तवान् च- "भोः, अद्य भवतः अदृष्टं फलितम् इति चिन्तयतु। यतः भवान् एव मया आहूतः, नान्यः" इति।

अहितुण्डिकः महता विनयेन नमस्कृत्य पृष्टवान्- "श्रीमन्! मम अदृष्टं फलितम् इत्यस्य कः अर्थः?" इति।

"भवान् महाराजस्य अनुजं तारापीडं जानाति खलु? श्वः भवता राजसभायां निस्सङ्कोचं वक्तव्यं यत् तारापीडः साक्षान्मरणजनकं विषसर्पं मम सकाशात् पञ्चभ्यः दिनेभ्यः पूर्वं क्रीतवान् इति। अग्रिमपरिणामस्य विषये अहं चिन्तयिष्यामि। सभासमाप्तेः अनन्तरं भवान् मां रहसि पश्यतु। भवते पञ्चसहस्रं सुवर्णनाणकानि दास्यामि। भवतः दारिद्र्यम् एकदिनाभ्यन्तरे अपगमिष्यति" इति उक्तवान् मन्त्री।





"भवान् यथा वदति तथैव भवतु" इति उक्त्वा नमस्कृत्य सः अहितुण्डिकः ततः निर्गतवान्।

अनन्तरदिने पूर्णायां सभायां मन्त्री सभ्यान् उद्दिश्य उक्तवान्- "महाराजः सर्पेण यत् दष्टः तत्र कुतन्त्रम् अस्ति इति मया स्पष्टं ज्ञातम्। साक्ष्याधारः अपि सम्पादितः। महाराजः आकस्मिकतया न सर्पेण दष्टः। इदानीम् अधिकारसूत्रं यः स्वीकृतवान् सः तारापीडः एव अग्रजस्य प्राणान् अपहर्तुं प्रयत्नं कृतवान् आसीत्" इति।

मन्त्रिणः वचनसमनन्तरम् एव सभायां कोलाहलः समुत्पन्नः। तारापीडस्य तु आश्चर्यस्य सीमा एव नास्ति।

मन्त्री मन्दहासं प्रकटयन् उक्तवान्- "भोः सभ्याः, मम वचनेन भवन्तः दिग्भ्रान्ताः जाताः स्युः। ममापि आरम्भे विश्वासः न उत्पन्नः। किन्तु साक्ष्याधारः अस्तीति कारणेन विश्वासः कर्तव्यः अभवत्" इति। अनन्तरं तम् अहितुण्डिकम् आनेतुं भटान् आज्ञापितवान्।

अहितुण्डिकः तां सभां प्रविश्य जनसमूहं दृष्ट्वा चकितः सन् आकाशं पश्यन् मौनं स्थितवान्। तदा मन्त्री उक्तवान्- "भोः, भीतिः मास्तु। धैर्येण वस्तुस्थितिं निवेदयतु" इति।

तारापीडः एतत्सर्वं स्वप्नम् इव भावयन् तम् अहितुण्डिकं संशयदृष्ट्या दृष्टवान्। तदा अहितुण्डिकः मन्देन स्वरेण उक्तवान्- "भोः सज्जनाः! अहं सत्यम् एव वदामि। महाराजः सर्पेण यथा दष्टः भवेत् तथा तारापीडवर्यः कृतवान् वा न वा इति न जानामि। ह्यः मन्त्रिवर्यः मां रहसि आहूय, पञ्चसहस्रस्य सुवर्णनाणकानाम् आशां प्रदर्श्य, 'तारापीडः मत्सकाशात् एकं विषसर्पं क्रीतवान् इति सभायां वदतु' इति माम् आज्ञापितवान्। मन्त्री मम समीपं यं प्रेषितवान् सः सेवकः तत्रैव द्वारसमीपे तिष्ठति" इति।

'अहितुण्डिकः विश्वासघातकः संवृत्तः। मम कुतन्त्रं प्रकाशितवान् एषः' इति चिन्तयन् मन्त्री कोपेन भटान् पश्यन्- "एतस्य वञ्चकस्य शिरच्छेदं कुर्वन्तु" इति

उच्चैः आक्रोशनं कृतवान्।

तदा तारापीडः झटिति सिंहासनात् उत्थाय भटान् पश्यन्- "एतं घातुकं मन्त्रिणं प्रथमं कारागारे स्थापयन्तु। पलायनं कुर्वन्तं तं भटम् अपि बन्धने स्थापयन्तु" इति आज्ञां कृतवान्। सभायां क्षणकालं संक्षोभः उत्पन्नः। भटाः विद्युद्वेगेन गत्वा मन्त्रिणं तं भटं च बद्धवन्तः।

तारापीडः अहितुण्डिकं दृष्ट्वा उक्तवान्- "भवान् निर्धनः सन् अपि दुराशां दूरीकृत्य वस्तुस्थितिं निवेदितवान्। भवतः राजभक्तिः अद्वितीया। भवतः कारणतः सर्वेषां पुरतः मन्त्रिणः दुर्बुद्धिः प्रकटिता अभवत्" इति।

तदा अहितुण्डिकः- "महाप्रभो! मन्त्री भटद्वारा माम् आनाय्य असत्यं कथयितुं यदा उक्तवान् तदा एव अहं तस्य दुष्टतां ज्ञातवान्। सः कश्चन नरसर्पः इति तदा एव प्रमाणितम् अभवत्। मम वृत्तिः तु सर्पग्रहणं खलु? अतः मन्त्रिणः वचनं तत्क्षणे अङ्गीकृत्य सभायां तस्य स्वरूपं प्रकटीकृतवान्" इति उक्तवान्।

तारापीडः तस्य वचनं श्रुत्वा सन्तोषं प्रकटयन्- "भवादृशस्य राजभक्तिपरस्य एतादृशम् अहितुण्डिकजीवनम् इतः परं मास्तु। भवते मम आस्थाने उद्योगं दापयिष्यामि। भवादृशाः एव मम आस्थाने अपेक्षिताः" इति उक्त्वा तम् अहितुण्डिकम् आस्थाने उत्तमे स्थाने नियोज्य तं सत्कृतवान्।

अनन्तरं सः मन्त्रिणं कारागारे स्थापितवान्। मन्त्रिणः साहाय्यकं भटम् उदारभावनया क्षान्तवान्, यतः तेन विशेषापराधः न कृतः आसीत्।

वैद्यानाम् उत्तमचिकित्सया दैवबलात् च चन्द्रापीडः कालान्तरे स्वस्थः जातः। अनन्तरं तारापीडः अग्रजस्य साहाय्यं कुर्वन् कर्तव्यं पालयति स्म। तयोः सहोदरयोः अन्योन्यतायाः कोऽपि विच्छेदः न जातः। तयोः शासने देशे सुखं, शान्तिः, समृद्धिः च आसीत्। जनाः अपि सन्तोषेण आसन्।






# ज्ञानार्थं वादः

हिमालयपर्वतप्रान्ते चम्पकवननामके प्रदेशे ज्ञानसूर्यः नाम पण्डितः आसीत्। सः गुरुकुलं चालयन् जीवनं यापयति स्म। वेदपठने, वेदार्थनिरूपणे उपनिषत्तत्त्वनिर्णये च तस्य अद्वितीयं स्थानम् आसीत्। देशविदेशात् आगताः विद्यार्थिनः तस्य गुरुकुले विद्याभ्यासं कुर्वन्तः आसन्।

एकदा प्रातःकाले ज्ञानसूर्यः आश्रमस्य पुरतः वटवृक्षस्य अधः उपविश्य शिष्यान् पाठयन् आसीत्। तदा दक्षिणदेशात् चक्रतीर्थः नाम पण्डितः तस्य दर्शनार्थम् आगतवान्।

चक्रतीर्थः ज्ञानसूर्याय आत्मनः परिचयं निवेद्य उक्तवान्- "अहं देशविदेशेषु सञ्चारं कुर्वन् सर्वान् महापण्डितान् वादे जितवान् अस्मि। भवतः कीर्तिं पाण्डित्यं च श्रुतवान् अस्मि। वादेन भवान् जितः चेदेव मम अद्वितीयत्वं सिध्येत् इति मम विचारः। अतः वादार्थं भवतः समीपम् आगतवान्" इति।

चक्रतीर्थस्य अहङ्कारपूर्णम् एतत् वचनं श्रुत्वा मन्दहासपूर्वकम् पृष्टवान् ज्ञानसूर्यः- "एवं तर्हि पाटलीपुत्रे निवसन्तं मम शिष्यं सरलाचार्यं पराजित्य एव भवान् अत्र आगतवान् स्यात् खलु?" इति।

तदा चक्रतीर्थः आश्चर्येण- "अहं पाटलीपुत्रस्थान् सर्वान् प्रसिद्धपण्डितान् जितवान् अस्मि। सरलाचार्यनामकः मया तत्र न दृष्टः, न वा श्रुतः च" इति उक्तवान्।

"एतत् स्यात् अपि। सः सरलाचार्यः स्वभावेन अतीव शान्तः। गर्वरहितः, आडम्बरशून्यः च। स्वकीयं पाण्डित्यं कस्यापि पुरतः प्रदर्शयितुं न उद्युक्तः स्यात् सः। अतः एव पाटलीपुत्रीयाः बहवः तस्य नाम न जानन्ति। मम एकः नियमः यत् यदि



भवान् मया सह वादं कर्तुम् इच्छति तर्हि भवता प्रथमं मम शिष्यः सः सरलाचार्यः जेतव्यः'' इति उक्तवान् ज्ञानसूर्यः।

तदा चक्रतीर्थः कोपेन- ''मया सह वादं कर्तुम् अनिच्छन् भवान् एवं वदति इति मन्ये। यदि शक्तिः स्यात् तर्हि वादार्थं सिद्धः भवतु। निरर्थकः नियमः किमर्थम्?'' इति पृष्टवान्।

तदा ज्ञानसूर्यः शान्तस्वरेण एव चक्रतीर्थम् उक्तवान्- ''मया सह वादः करणीयः इति भवान् एव आगतवान्! अतः मया सूचितः नियमः भवता अङ्गीकरणीयः एव। प्रथमं सरलाचार्यं पश्यतु'' इति। प्रतिवचनं किमपि वक्तुम् अशक्तः चक्रतीर्थः मौनं ततः निर्गतवान्।

केषाञ्चित् दिनानाम् अनन्तरं चक्रतीर्थः पाटलीपुत्रं प्राप्तवान्। सरलाचार्यम् अन्विष्य तस्य गृहं गतवान्। तदा सरलाचार्यः शिष्यं पाठयन् आसीत्।

स पाठः चर्चारूपेण प्रचलन् आसीत्। पाठसमाप्तिपर्यन्तं तूष्णीम् उपविश्य समाप्तेः अनन्तरं स्वपरिचयं कथयित्वा उक्तवान् चक्रतीर्थः- ''इदानीम् अत्र प्रवृत्तं सर्वं श्रुतवान्। किन्तु मम तु संशयः - भवान् शिष्यं पाठयति, उत शिष्यः एव भवन्तं पाठयति? इति। किमिदं शिक्षणम्?'' इति।

तदा सरलाचार्यः मन्दहासपूर्वकं- ''गुरुः केवलं यत् कथयति तत् शिक्षणं न। अन्यच्च मम शालायां गुरुशिष्ययोः मध्ये न तथा अन्तरम्'' इति उक्तवान्।

''अये! कीदृशः गुरुः भवान्! 'मम शिष्यः वादेन जेतव्यः' इति भवतः गुरुः मां किमर्थम् उक्तवान् इत्येव न ज्ञायते। अस्तु तावत्, वादार्थं सिद्धः भवतु'' इति उक्तवान् चक्रतीर्थः।

सरलाचार्यः चक्रतीर्थं परीक्षादृष्ट्या पश्यन्- ''वादः! अहं केनापि सह वादं न करोमि इति मम गुरुः जानाति एव। तादृशः सः भवन्तं वादार्थं मत्समीपं प्रेषितवान् इत्येतत् विश्वसितुम् एव न शक्यते'' इति उक्तवान्।

तदा चक्रतीर्थः तिरस्कारपूर्णस्वरेण- ''अहो! एवं वा? भवतः गुरुः भवान् च वादप्रसङ्गतः विमोचनम् एव इच्छतः। अतः

एव एवं व्यवहारः। यदि वादं कर्तुं सामर्थ्यं नास्ति तर्हि पराजयम् अङ्गीकुर्वन्तु भवन्तः" इति गर्जितवान्।

तदा सरलाचार्यः शान्तस्वरेण उक्तवान्- "अहं भवता सह वादार्थं न आगच्छामि इति एतावदेव उक्तवान्। शास्त्रीया चर्चा मया कदाचित् अपि न निराकृता। अतः पराजयाङ्गीकारस्य प्रश्नः एव नास्ति अत्र" इति।

"तया चर्चया मम कः लाभः?" इति असमाधानेन पृष्टवान् चक्रतीर्थः।

सरलाचार्यः पुनः अपि शान्तस्वरेण उक्तवान्- "समानस्तरीयेण सह चर्चया एव ज्ञानवर्धनार्थम् अवकाशः लभ्यते। किन्तु वादार्थं चर्चा न स्यात्। यदि चर्चा वादार्थं स्यात् तर्हि अन्यस्य मुखभङ्गः एव लक्ष्यं भवति। तदा चर्चया ज्ञानस्य प्रकाशनं न, अज्ञानस्य अहङ्कारस्य च प्रदर्शनं भविष्यति। अतः एव अहं वादार्थं न सिद्धः। यदि ज्ञानवर्धनार्थम् इच्छा स्यात् तर्हि चर्चा उत्तमः मार्गः" इति।

चक्रतीर्थः क्षणकालं मौनं स्थित्वा सरलाचार्यस्य अनुमतिं प्राप्य चम्पकवनस्थस्य ज्ञानसूर्यस्य समीपं गतवान्।

प्रत्यागतवन्तं चक्रतीर्थं पृष्टवान् ज्ञानसूर्यः- "सरलाचार्यं दृष्टवान् वा? वादेन तं जितवान् वा?" इति।

चक्रतीर्थः ज्ञानसूर्यस्य पादयोः प्रणम्य- 'ज्ञानं निरवधिकम्। तत् कस्यापि एकस्य न' इति सरलाचार्यस्य वचनं श्रावयित्वा उक्तवान्- "एषः अंशः मया ज्ञातव्यः इति उद्देशेन एव भवान् मां सरलाचार्यसमीपं प्रेषितवान्। अहम् अपि सरलाचार्यः इव पण्डितः भवितुम् इच्छामि। अतः शिष्यत्वेन अङ्गीकृत्य माम् अनुगृह्णातु" इति।

ज्ञानसूर्यः तं वात्सल्येन उत्थाप्य प्रीत्या आलिङ्गितवान्। तं शिष्यत्वेन अङ्गीकृतवान् च। अनन्तरं केषुचित् वर्षेषु चक्रतीर्थः विशेषपाण्डित्यं प्राप्य शाश्वतकीर्तिं सम्पादितवान्।






# १५

[ उग्रदत्तः रुद्रः अरुद्रः च इदानीं पञ्चदशवर्षीयाः। व्याघ्रचर्मधारिणां रहस्यं ज्ञातुं ते दुर्गतः प्रस्थितवन्तः। अरण्ये तैः कस्याश्चित् स्त्रियः करुणक्रन्दनं श्रुतम्। यदा एते तत्र गतवन्तः तदा व्याघ्रचर्मधारिणः एतान् बद्धवन्तः। भयङ्कराणाम् अग्निपक्षिणां समीपं नीतवन्तः च। तदनन्तरम्,.... ]

अकस्मात् प्रवृत्तया एतया घटनया उग्रदत्तः दिग्भ्रान्तः। "कीदृशी मूर्खता आचरिता मया! मम स्नेहितौ रुद्रः अरुद्रः चापि अहम् इव एव अविचार्य शत्रूणां जाले स्वयं पतितवन्तौ। अहो विधिः!" इति सः बहुधा खेदम् अनुभूतवान्।

'दीनस्वरेण या आर्तनादं कृतवती सा तरुणी अपि एतेषां दुष्कर्मिणां वशं गता स्यात् वा? उत तेभ्यः आत्मानं विमोच्य गतवती स्यात् वा? अथवा अस्मान् वञ्चयितुम् एव सा करुणक्रन्दनस्य अभिनयं कृतवती स्यात् वा? तस्याः शब्दः इदानीं किमर्थं न श्रूयते? तस्याः मुखे ते वस्त्रं स्थापितवन्तः वा? अत्रत्या परिस्थितिः अवलोकिता चेत् तस्याः इतः पलायनम् असाध्यम् इति भाति। तस्याः गतिः या काऽपि स्यात् नाम. अस्माकं विमोचनं कथम्? अस्माकं कोलाहलं श्रुत्वा अस्मत्पक्षीयाः यदि केऽपि आगच्छेयुः तर्हि




एव अस्माकं विमोचनं भवेत्। अन्यथा न' इति चिन्तितवान् उग्रदत्तः।

"रुद्र S S S" इति उच्चैः आहूतवान् उग्रदत्तः। प्रतिवचनं किमपि न श्रुतम्। एते व्याघचर्मधारिणः तु उग्रदत्तं अग्निपक्षिणः उपरि आरोपयितुं प्रयतमानाः आसन्।

"उग्रदत्तSS! मां भयङ्करपक्षिणः उपरि आरोपितवन्तःसन्ति। मम हस्तौ पादौ च बद्धौ स्तः। अरुद्रः अपि एतेषां बन्धने अस्ति। भवतः का परिस्थितिः भोः SS?" इति दूरात् पृष्टवान् रुद्रः।

"अये! तूष्णीं तिष्ठतु। कोलाहलः न करणीयः" इति कश्चित् व्याघ्रचर्मधारी कर्कशस्वरेण उच्चैः तर्जितवान्।

तदा अन्यः कश्चित् स्वसमीपस्थम् उपहासपूर्णस्वरेण – "अनायासेन एते त्रयः अस्माकं वशे आगताः सन्ति। एते मूर्खतया परस्परम् अतिशेरते। सा सुदर्शनराजस्य पुत्री चन्द्रलेखा अपि एतादृशी एव स्यात्। होS! होSS!" इति उक्त्वा उच्चैः हसितवान्।

एतत् श्रुतवता उग्रदत्तेन ज्ञातं यत् सा युवती चन्द्रलेखानामिका, सुदर्शनराजस्य पुत्री च इति। 'अस्माकं ग्रहणेन महान् विजयः साधितः इति गर्वम् अनुभवन् एषः व्याघ्रचर्मधारी विजयोन्मादे तस्याः सुन्दर्याः रहस्यम् उद्घाटितवान्। अस्मान् मूर्खान् वदन् एषः अपि महामूर्खः एव। रहस्यं गोपयितुम् अशक्तः एषः कः अन्यः ऋते महामूर्खात्?' इति आलोचितवान् उग्रदत्तः।

अत्रान्तरे दुर्गस्य दिक्तः महान् कोलाहलशब्दः श्रुतः। अश्वानां हेषारवः, आयुधानां खणखणध्वनिः, अश्वारोहिणां हर्षोद्घोषः इत्यादयः दूरात् श्रूयन्ते स्म।

'अस्माकं रक्षणार्थं सेना आगच्छन्ती अस्ति। प्रायः राजकुमार्याः आर्तध्वनिः भटैः श्रुतः स्यात्। अस्मिन् समये मम हस्तपादादिबन्धनं यदि न स्यात् तर्हि कियत् समीचीनं भवेत्! अहं शक्तः अपि बन्धनकारणतः किमपि कर्तुम् अशक्तः सञ्जातः खलु!" इति बहुधा खेदम् अनुभूतवान् उग्रदत्तः।

उग्रदत्तः शरीरम् उभयतः चालयन्

बन्धनं शिथिलीकर्तुं प्रयत्नं कृतवान्। तत् दृष्ट्वा कश्चित् व्याघ्रचर्मधारी कर्कशस्वरेण गर्जन् शूलायुधम् उग्रदत्तस्य वक्षःस्थले स्थापयन्- "भोः, यदि विमोचनार्थं किमपि प्रयत्नं कुर्यात् तर्हि एतेन शूलायुधेन भवन्तं मारयिष्यामि" इति उक्तवान्।

अपरक्षणे भयङ्करः पक्षी आकाशम् उद्दिश्य उड्डयनम् अकरोत्।

तथापि उग्रदत्तः बन्धनं शिथिलीकर्तुं प्रयत्नं कुर्वन्- "हा हन्त! समयः अतीतः। ज्वालाभिः आक्रान्तं ज्वालाद्वीपं प्रति मां नयन्तः सन्ति। न जाने, अग्रे किं भविष्यति इति" इति खेदम् अनुभूतवान्।




आकाशमार्गम् आश्रिताः ते भयङ्करपक्षिणः मेघानाम् उपरि गच्छन्तः पूर्वदिशम् अनुसृतवन्तः। अभिमुखं गच्छता वायुना उग्रदत्तः पीड्यमानः आसीत्। वायुवशात् समग्रतया बद्धं पिण्डाकारेण स्थितं तदीयं शरीरम् इतस्ततः डोलायते स्म। उग्रदत्तः यथा न पतेत् तथा गृहीतवान् आसीत् कश्चित् व्याघ्रचर्मधारी। वर्णनातीतां वेदनाम् अनुभवति स्म उग्रदत्तः।

किञ्चित्कालानन्तरं पक्षिणः अधः अवतरणस्य अनुभवः जातः। अग्नेः तीव्रः तापः अपि तेन अनुभूतः। 'प्रायः ज्वालाद्वीपः प्राप्तः स्यात्' इति चिन्तितवान् उग्रदत्तः।

अत्रान्तरे तेन कश्चन आज्ञास्वरः श्रुतः- "भो भोः! भल्लूकचर्मधारिणः आगताः! सर्वे जागरूकाः भवन्तु। चन्द्रलेखा इतरे बन्धिनः च यत्र सन्ति तान् पक्षिणः जागरूकतया अवतारयन्तु। शिष्टाः सर्वे भल्लूकधारिणां सम्मुखीकरणार्थम् उद्युक्ताः भवन्तु। अस्मद्- बन्धिनः कदापि शत्रुवशाः यथा न भवेयुः तथा जागरूकतया व्यवहरन्तु" इति।

'अहो! ज्वालाद्वीपे अपि पक्षद्वयम् अस्तीति भाति। व्याघ्रचर्मधारिणां विरोधिनां समीपे अपि भयङ्करपक्षिणः सन्ति।' इति चिन्तितवान् उग्रदत्तः।

इदानीं तस्य शरीरे नवोत्सहस्य सञ्चारः जातः। 'द्वयोः कलहः तृतीयस्य लाभाय' इति आभाणकं सः स्मृतवान्। 'लाभः कोऽपि न भवेत् चेदपि अपायात् विमोचनं प्राप्तं चेत् पर्याप्तम्' इति तस्य विचारः।




'एते व्याघ्रचर्मधारिणां पक्षीयाः भल्लूकचर्मधारिणां पक्षीयाः च पक्षिणः आरुह्य आकाशे युद्धरताः सन्ति। एतन्मध्ये अहं मम मित्राणि वा यदि पतेम तर्हि अस्मदीयानि अस्थीनि अपि चूर्णितानि भवेयुः' इति भाविनीं घटनां सम्भाव्य एव भीतः अभवत् उग्रदत्तः। भीत्या कम्पमानः सः पक्षिणः पिच्छं दृढं गृहीतवान्।

अत्रान्तरे उग्रदत्तवाहकः पक्षी अधोमुखं गमने उद्युक्तः जातः। उग्रदत्तः शयानः एव शिरः उन्नीय परितः अवलोकितवान्। भल्लूकचर्मधारिणः शूलायुधं गृहीत्वा युद्धसन्नद्धाः सन्तः स्वकीयान् वाहकान् पक्षिणः प्रेरयन्तः आसन्। व्याघ्रचर्मधारिणः परितः आक्रम्य स्थितवन्तः आसन् ते।

क्षणाभ्यन्तरे आकाशे व्याघ्रचर्मधारिणां भल्लूकचर्मधारिणां च मध्ये घोरं युद्धम् आरब्धम्। पक्षिणाम् उपरि उपविष्टाः शूलायुधानां घातेन अधः पतन्ति स्म। वाहकानाम् अभावात् पक्षिणः पक्षौ चालयन्तः केकारवं कुर्वन्तः च प्राणरक्षणर्थं इतस्ततः उड्डयमानाः आसन्।

उग्रदत्तस्य वाहनभूतः पक्षी एकस्य पर्वतस्य उपरि अवतीर्णवान्। पक्षिणः चालकौ व्याघ्रचर्मधारिणौ अधः अवतीर्णवन्तौ। उग्रदत्तम् उन्नीय कटम् इव अधः पातितवन्तौ च। अदृष्टवशात् उन्नतैः तृणैः व्याप्ते प्रदेशे पतितवान् उग्रदत्तः। तेन सः विशेषतया न व्रणितः। किन्तु तीव्रा वेदना तु अभवत् एव। असह्यया वेदनया पीडितः सः चेष्टारहिततया तूष्णीं स्थितवान्।

एकः व्याघ्रचर्मधारी तस्य समीपम् आगत्य पादेन तम् इतस्ततः चालयन्- "किमपि चलनं न दृश्यते। एतत् पिण्डं मृतप्रायम्" इति उक्तवान्।

तदा अन्यः व्याघ्रचर्मधारी उच्चैः हसन्- "एषः वराकः मृतः वा भवतु जीवितः वा तिष्ठतु, अस्माकं किं तेन? राजकुमारी चन्द्रलेखा तु विना विघ्नम् अस्मन्नायकस्य भवनं प्राप्तवती एव। एतस्य विषये अनन्तरं चिन्तयेम। भल्लूकचर्मधारिणः कन्धस्य अनुचराः प्रथमं नाशनीयाः। तदर्थं गच्छाव




तावत्'' इति वदन् भयङ्करपक्षिणः समीपं गतवान्। अन्यः तम् अनुसृतवान्।

व्याघ्रचर्मधारिणोः सम्भाषणं शृण्वन् उग्रदत्तः निश्चलं स्थितः आसीत्। ''यदि एतौ मां जीवसहितं जानीयुः तर्हि निर्दयं मारयेयुः। कन्धनामकः तेषां भल्लूकचर्मधारिणां नायकः इति भाति। सुदर्शनराजस्य पुत्रीं चन्द्रलेखां व्याघ्रचर्मधारिणः स्वनायकस्य भवनं प्रापितवन्तः इति तु स्पष्टम्। मम स्नेहितयोः रुद्रारुद्रयोः का वा गतिः स्यात्?'' इति सः आलोचितवान्।

हस्तपादयोः बद्धां रज्जुं शिथिलीकर्तुं प्रयत्नं कृतवान् उग्रदत्तः। किन्तु तेन प्रयत्नेन बन्धनानि शरीरे वेदनाम् अजनयन्। ''मां रक्षन्तुऽऽ'' इति क्रन्दनं कृतवान् उग्रदत्तः। तत् अरण्यरोदनं श्रोतुं तत्र कः अस्ति?

''हा हन्त! कीदृशी असहायपरिस्थितिः एषा! रुद्रारुद्रौ अपि अहम् इव बन्धने स्थितौ स्याताम्। राक्षसराजस्य दत्तकपुत्रस्य मम कीदृशी परिस्थितिः आगता! अहो दुर्विधिः!'' इति उद्गारं प्रकटितवान् उग्रदत्तः।

आकाशे अर्धघण्टापर्यन्तं युद्धं प्रवृत्तम्। पश्चिमदिशम् अनुसरतः कांश्चन पक्षिणः दृष्टवान् उग्रदत्तः। तान् अनुसृत्य अन्ये केचन पक्षिणः धावन्तः आसन्।

सूर्यः आकाशस्य मध्ये आगतवान्। आतपः तीव्रः जातः। पिपासाकारणतः उग्रदत्तस्य कण्ठः शुष्कः जातः आसीत्। 'एवम् एव चेत् अल्पे एव काले मम मरणं भवेत्' इति आलोचितवान् सः।

''अयि भगवन्! पिपासया म्रियमाणः अस्मि! मम प्राणाः निर्गच्छन्ति। इतोऽपि अधिककालम् अहं न जीवामि'' इति विलापं कृतवान् उग्रदत्तः। 'शत्रवः आगताः चेदपि ते मम एतां दयनीयां दशां दृष्ट्वा साहाय्यं कुर्युः एव। ते अपि प्रायः मां विस्मृतवन्तः इति भाति। अथवा भल्लूकचर्मधारिभिः सह युद्धे मृताः स्युः अपि ते।'

एवम् उग्रदत्तः यदा चिन्तयन् आसीत् तदा समीपस्थात् वृक्षसमूहात् कश्चन शब्दः श्रुतः। ततः सर्पणं कुर्वन् उग्रदत्तः वृक्षसमूहस्य समीपं गतवान्। परीक्षादृष्ट्या परितः परिशीलितवान् अपि। तत्रत्यं दृश्यं



दृष्टवतः तस्य शरीरे तीव्रं कम्पनम् उत्पन्नम्।

उभौ भल्लूकौ वृक्षच्छायायां स्थित्वा उग्रदत्तम् एव पश्यतः! एषः जीवति उत मृतः स्यात् वा इति तयोः सन्देहः। 'मम असहायकता ताभ्यां यदि ज्ञाता स्यात् तर्हि निश्चयेन आक्रमणं क्रियते एव' इति आलोचितवान् उग्रदत्तः।

उग्रदत्तः एकवारं श्वासं निरुध्य शक्तिसञ्चयं सम्पाद्य हस्तस्य आधारेण किञ्चिदिव उत्थाय उच्चस्वरेण गर्जनं कृतवान्। एतत् गर्जनं श्रुत्वा तौ भल्लूकौ पलायनं कृतवन्तौ। 'अगता आपत् निवृत्ता अभवत्' इति समाधानेन निःश्वसितवान् उग्रदत्तः।

सूर्यः क्रमशः अस्ताचलसमीपं गतवान्। उग्रदत्तेन स्थितस्य प्रदेशस्य परिसरः शीतलः जातः। शीतलवायुकारणतः मुखे किञ्चिदिव आर्द्रता उत्पन्ना। बुभुक्षापीडा तु क्षणे क्षणे वर्धते। निद्रा अपि तं बाधते। 'निद्रां करोमि चेत् तत्समये वृकभल्लूकादयः मां खादेयुः' इति चिन्तयति सः। अतः जागरूकतया स्थातुं बहुधा प्रयत्नं करोति। तथापि सः अजानन् एव निद्रावशतां गतः अभवत्।

कटिप्रदेशे मुखप्रदेशे च कस्यचित् प्राणिनः नखपीडाम् अनुभवन् उग्रदत्तः निद्रातः जागरणं प्राप्तवान्। कोऽपि प्राणी आक्रमणं कृतवान्' इति चिन्तयन् उच्चैः 'होऽऽ' इति आक्रोशनं कृतवान्। तत्समये एव समीपे कुत्रापि उच्चैः आक्रोशनं श्रुतवान् सः। तदा कश्चन कृष्णवर्णीयः भयङ्करः प्राणी तस्य शरीरात् उत्प्लुत्य अन्धकारे कुत्रापि निलीनः अभवत्। सः कश्चन भल्लूकः!

व्रणितं भागं हस्तेन स्पृशन् उग्रदत्तः 'दूरतः यः ध्वनिः श्रुतः तं श्रुत्वा भल्लूकः धावितवान् इति तु मम सौभाग्यम्। तथा आक्रोशनं कैः कृतं स्यात्?' इति आलोचितवान्।

"अत्रैव अस्ति सः। आगच्छन्तु। गुल्मानां मध्ये सः पतितः अस्ति। भल्लूकः इतः धावितवान्" इति वदन् एकः उग्रदत्तसमीपम् आगतवान्। तस्य हस्ते दीर्घः कश्चन

शूलायुधः आसीत्। सः भल्लूकचर्म धृतवान् आसीत्।

उग्रदत्तः शिरः उन्नीय वेदनापूर्णस्वरेण कष्टेन- "मम बन्धनं शिथिलीकरोतु। पानार्थं किञ्चित् जलम् अनुगृह्णतु कृपया" इति उक्तवान्।

भल्लूकचर्मधारी प्रतिवचनं किमपि अदत्त्वा बन्धनं शिथिलीकृतवान्। अत्रान्तरे अन्यौ भल्लूकचर्मधारिणौ तत्र आगतवन्तौ। तयोः एकस्य स्कन्धो अलाबुपात्रम् उत्तोलितम् आसीत्। उग्रदत्तः तत् दृष्ट्वा 'पिपासा पिपासा' इति वदन् हस्तं प्रसारितवान्। भल्लूकचर्मधारी अलाबुपात्रस्य आवरणं निष्कास्य जलं पायितवान्। उग्रदत्तः यावत् आवश्यकं तावत् जलं पीत्वा 'पर्याप्तम्' इति शिरश्चालनपूर्वकं सूचितवान्।

पिपासायाः निवारणतः उग्रदत्तो किञ्चिदिव शक्तिसञ्चारः जातः। बन्धनाभावतः सः हस्तौ पादौ च इतस्ततः चालितवान्। तेन नाडीषु रक्तसञ्चारः यथापूर्वं जातः।

"भवान् इदानीं चलितुं शक्नुयात् वा?" इति कश्चित् भल्लूकचर्मधारी पृष्टवान्।

"प्रथमं एतत् वदन्तु यत् भवन्तः शत्रवः, उत मित्राणि?" इति प्रश्नार्थकदृष्ट्या पश्यन् पृष्टवान् उग्रदत्तः।

"अस्माकं नायकः यान् प्रश्नान् पृच्छति तेषाम् उत्तरं भवान् प्रथमं वदतु। तदा सर्वं स्वयं ज्ञातं भविष्यति" इति उक्तवान् सः भल्लूकचर्मधारी।

"अस्तु तर्हि। भवतां नायकस्य समीपम् एव गच्छाम तावत्" इति वदन् उत्थितवान् उग्रदत्तः।

ते भल्लूकचर्मधारिणः तेन सह किञ्चिद्दूरं गतवन्तः। शिलाराशिसमीपं गत्वा तत्रत्यम् एकं शिलापटलम् अपसार्य बिलं प्रविष्टवन्तः। प्रवेशानन्तरं तं शिलापटलं जागरूकतया यथापूर्वं स्थापितवन्तः च। (अनुवर्तते)






# धैर्यशाली

'प्रारब्धमुत्तमजनाः न परित्यजन्ति' इति वचनं पालयन् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। वृक्षतः शवम् अवतार्य स्कन्धे आरोपितवान्। मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः बेतालः अवदत्- "राजन्! सर्वनिद्राकारणीभूतः समयः एषः। स्थलं तु भीतिजनकं श्मशानम्। एवं स्थिते अपि भवान् यत् निरन्तरं परिश्रमं करोति, तेन अहं चिन्तयामि यत् भवतः प्राणभीतिः किञ्चिदपि नास्ति इति। कदाचित् केचन प्राणापायपरिस्थितौ अपि विशेषधैर्यं साहसं च प्रदर्शयन्ति। तत्समये ते स्वेन किं क्रियमाणम् अस्ति इत्येव न स्मरन्ति। परिस्थितिः तान् तथा प्रेरयति। अत्र उदाहरणरूपेण एकां समीचीनां कथां श्रावयामि। कथां शृण्वतः गच्छतः भवतः मार्गायासः तेन परिहृतः भवेत्" इति।

अनन्तरं बेतालेन कथा आरब्धा—

पूर्वं ब्रह्मपुरे रामः भीमः नाम स्नेहितौ आस्ताम्। बाल्यतः आरभ्य तयोः गाढः

## वेतालकथा



स्नेहः। तयोः मध्ये रामस्य मनः अतीव कोमलम्। ज्येष्ठानां वचनं बिरुध्य सः कदापि न व्यवहरति। किन्तु भीमस्य एतद्विरुद्धः स्वभावः। सहसा कार्यं करोति। प्रमादान् अपि करोति।

एकदा तं ग्रामं खड्गयुद्धप्रवीणः कश्चित् आगतवान्। 'खड्गयोधः' इत्येव तस्य प्रसिद्धिः आसीत्। सः ग्रामे स्वकीयं खड्गनैपुण्यं प्रदर्श्य सर्वेषाम् आदरस्य पात्रम् अभवत्। अभिमानिनां हस्ततः बहूनि पारितोषिकाणि प्राप्तवान् अपि। ग्रामस्थाः बहवः तेन सह खड्गयुद्धे भागं गृहीत्वा पराजयं प्राप्तवन्तः आसन्। एवं पराजितेषु रामः भीमश्च अन्यतमौ।

खड्गयुद्धस्य प्रदर्शनस्य समाप्तेः अनन्तरं सः खड्गयोधः रामं दृष्ट्वा प्रोत्साहनवाक्यानि उक्तवान्- "भवतः खड्गग्रहणरीतिः अतिसमीचीना अस्ति। खड्गचालनपद्धतिः अपि श्लाघ्या एव। प्रयत्नः कृतः चेत् महावीरः भवितुम् अर्हति भवान्। मम जीवने एका इच्छा अस्ति यत् मत्समानः अन्यः निर्मातव्यः इति। भवादृशस्य उत्तमस्य अन्वेषणं कुर्वन् आसम् अहम्। भवान् मम शिष्यत्वम् अङ्गीकर्तुं शक्नोति वा?" इति।

रामः खड्गयोधस्य शिष्यत्वम् अङ्गीकर्तुं सिद्धः जातः। किन्तु तस्य मातापितरौ स्वकीयाम् अनुमतिं न दत्तवन्तौ।

भीमः अपि खड्गयोधस्य शिष्यः भवितुम् इच्छति। सः स्वकीयाम् इच्छां खड्गयोधाय निवेदितवान् अपि। किन्तु सः खड्गयोधः एव एतं प्रस्तावं तिरस्कृतवान्।

तदा भीमः रामम् उक्तवान्- "भोः, भवतः सौभाग्यम् इत्येव वक्तव्यम्। एतं सदवकाशं भवान् न त्यजतु। मातापितरौ व्यामोहवशात् अनुमतिं न दत्तवन्तौ। खड्गयोधस्य शिष्यत्वम् अवश्यम् अङ्गीकरोतु" इति।

भीमस्य एतां सूचनां तिरस्कृतवान् रामः। यतः सः मातापितरौ देवतातुल्यत्वेन भावयति। तयोः वचनम् एव अन्तिमं प्रमाणं तस्य दृष्ट्या।

पुनः केषाञ्चित् दिनानाम् अनन्तरं कर्मवीरः नाम कविः ब्रह्मपुरम् आगतवान्। स्वप्रतिभया जनान् रञ्जयन् ग्रामीणानां प्रीतिं सम्पादितवान् सः।

ग्रामीणान् तरुणान् वदति सः- "यस्मिन् कस्मिन् अपि विषये प्रश्नान् पृच्छन्तु" इति। तैः पृष्टानां प्रश्नानाम् उत्तरं तत्क्षणे एव पद्यरूपेण

वदति। कवेः आशुकविताशक्तिं दृष्ट्वा सर्वे आश्चर्यचकिताः।

रामः कवितारूपेण एव प्रश्नं पृष्टवान्। एतत् श्रुत्वा सन्तुष्टः कर्मवीरः साधुवचनानि वदन् रामं सूचितवान्- "मम शिष्यत्वम् अङ्गीकृत्य मया सह आगच्छतु भवान्। काव्यसूक्ष्मान् भवते पाठयामि। भवान् अपि कालान्तरे अहम्इव महाकविः भवितुम् अर्हति" इति।

मातापितरौ अनुमतिं न दत्तवन्तौ इत्यतः रामः एतम् अपि प्रस्तावं न अङ्गीकृतवान्।

अनन्तरकाले ब्रह्मपुरम् आगतः कश्चित् सङ्गीतविद्वान् अपि रामं शिष्यत्वेन स्वीकर्तुं सिद्धः जातः आसीत्। अत्रापि रामस्य मातापितरौ अनुमतिं न दत्तवन्तौ।



एवं बहूनां महात्मनाम् आदरपात्रभूतस्य महाप्रतिभाशालिनः रामस्य विषये भीमस्य अनुजायाः पार्वत्याः विशेषादरः। रामम् एव परिणेतुम् इच्छन्ती सा स्वकीयाम् इच्छां मातापितरौ स्वयं निवेदितवती।

तौ एतद्विषये रामं पृष्टवन्तौ। रामः स्वमातापित्रोः अनुमतिं प्रार्थितवान्। किन्तु तौ एतम् अपि प्रस्तावं न अङ्गीकृतवन्तौ।

भीमः प्रवृत्तं सर्वं ज्ञात्वा रामसमीपं गत्वा पृष्टवान्- "मित्र! मातापित्रोः इष्टानिष्टताविषये पुनः चिन्तयेम। मम भगिनीं भवान् इच्छति वा न वा?" इति।

"वैयक्तिकतया तु अहम् इच्छामि। किन्तु मम माता पिता च न इच्छतः इति कारणतः अहं पार्वतीं परिणेतुं न शक्नोमि। मातापित्रोः इच्छा एव मम इच्छा" इति उक्तवान् रामः।

भीमः रामस्य मातापित्रोः समीपं गत्वा निवेदितवान्- "मम भगिनीं स्नुषात्वेन आनेतुम् अवश्यम् अनुमतिः दातव्या" इति।

"भवतः भूमिः गृहम् इत्यादीनां स्वामिनी यदि सा भवेत् तर्हि एषः विवाहः प्रचलेत्" इति भीमं निर्दाक्षिण्यम् उक्तवान् रामस्य पिता।

"एतावदेव वा?" इति वदन्भीमः सर्वस्वं दातुम् अङ्गीकृतवान्।

अनन्तरम् अल्पेषु एव दिनेषु राम-पार्वत्योः विवाहः सवैभवं सम्पन्नः।

भीमः स्वगृहे एव निवसन् रामाय प्रतिमासं भाटकं ददाति स्म। कृषिविषये अपि तथैव। स्वयं कृषिं कुर्वन् वेतनत्वेन धनं प्राप्नुवन् धान्यादिकं रामस्य गृहं प्रापयति स्म।

अग्रजस्य भीमस्य एतां दुरवस्थां दृष्ट्वा पार्वती अतीव खिद्यति। 'पतिं किमपि वदामि



चेत् प्रयोजनं नास्ति' इति भावयन्ती सा श्वश्रूं श्वशुरं च स्वमनोगतं निवेदितवती। तेनापि किमपि प्रयोजनं न सिद्धम्।

एवम् एव कानिचन वर्षाणि अतीतानि। रामस्य मातापितरौ इदानीम् असहायौ वृद्धौ। अतः गृहस्य समग्रं व्यवहारं पार्वती एव निर्वहति।

अग्रजस्य गृहं भूमिः इत्यादिकं सर्वम् अग्रजाय एव प्रत्यर्पणीयम् इति पार्वत्याः आशा। किन्तु भीमः एतत् न अङ्गीकृतवान्। पार्वत्याः कोपः इदानीं श्वश्रूश्वशुरयोः विषये।

एतत् ज्ञात्वा भीमः तर्जनपूर्वकं पार्वत्यै विवेकं बोधितवान्।

तदा पार्वती कोपेन एव प्रत्युत्तरं दत्तवती- "मम गृहे अहं स्वतन्त्रा। यथा उचितं भासते तथा व्यवहरामि अहम्। मां विवेकं बोधयितुं भवतः अधिकारः नास्ति। यतः भवान् मम गृहसदस्यः न। भवतः बोधनं न पालयामि, न इच्छामि वा" इति।

भीमः म्लानमुखः सन् ततः प्रत्यागतवान्। मार्गे मिलितवन्तं रामम् उक्तवान् सः- "भोः, वृद्धयोः ज्येष्ठयोः विषये कोपप्रदर्शनं सर्वथा अनुचितम् इति भवान् वा पार्वतीं बोधयतु। मम वचनं तु सा सर्वथा तिरस्कृतवती" इति।

"तां विवेकं बोधयितुम् अहम् अपि न शक्नोमि" इति उक्तवान् रामः।

एवं स्थिते तस्मिन् प्रान्ते क्षामः आगतः। वर्षद्वयतः वृष्टिः न आगता इत्यतः जनानां महान् हाहाकारः।

तदा पार्वती पतिम् उक्तवती- "गृह-व्यवहारम् अहं कथञ्चित् वा निर्वक्ष्यामि। भवान् तु महाप्रतिभाशाली। अतः अग्रजेन सह राजधानीं गच्छतु। राजास्थाने कमपि उद्योगं सम्पादयतु च" इति।

रामः भीमः च राजधानीं प्रति प्रस्थितवन्तौ। तयोः सौभाग्येन राजधानीतः पूर्वम् एव मार्गे ताभ्यां महाराजस्य शिबिरं दृष्टम्। महाराजः मृगयार्थं तत्र आगतः आसीत्।

भीमः महाराजं दृष्ट्वा स्वकीयां दयनीयां दशां निवेद्य उद्योगं प्रार्थितवान्।

"मम आस्थाने धैर्यशालिनाम् एव अवकाशः। धैर्यपरीक्षणार्थं भवतोः अनुमतिः अस्ति वा?" इति पृष्टवान् राजा।

रामः भीमः च एतत् अङ्गीकृतवन्तौ। "दत्तं वचनं परिपालनीयम्" इति जागरूकता-

वचनम् उक्तवान् महाराजः।

"भवान् एतस्य देशस्य पालकः प्रभुः। भवतः सन्निधौ वचनभ्रष्टता कथम्?" इति पृष्टवान् भीमः।

तदा राजा सेवकद्वारा पञ्जरद्वयम् आनायितवान्। तयोः अन्तः बुभुक्षितौ भयङ्करौ व्याघ्रौ आस्ताम्।

"मृगयासन्दर्भे एतौ बन्धने स्थापितौ। चतुर्भ्यः दिनेभ्यः एतयोः आहारः नास्ति। निरायुधाभ्यां भवद्भ्यां पञ्जरयोः प्रवेशः करणीयः। व्याघ्रेण सह युद्धं कृत्वा धैर्यं प्रदर्शनीयं च" इति सूचितवान् राजा।

"प्रभो! एतत् तु अन्याय्यम्। धैर्यं तु प्राणधारणार्थं, न तु प्राणेभ्यः विमुक्तैः भवितुम्। बुभुक्षितेन व्याघ्रेण सह युद्धं नाम जीविताशापरित्यागः एव खलु?" इति सधैर्यम् उक्तवान् भीमः।

तदा राजा रामं कोपेन पश्यन् पृष्टवान्- "भोः, किं वदति भवान्? धैर्यं निरूपयितुम् इच्छति? उत राजाज्ञां धिक्कृत्य अविधेयतां प्रदर्शयति?" इति।

"अहं व्याघ्रेण सह युद्धं करोमि" इति सूचितवान् रामः।

एतत् श्रुत्वा आश्चर्यचकितः राजा- "एवं तर्हि पञ्जरस्य द्वारम् उद्घाट्य अन्तः प्रविशतु। भवतः धैर्यं निरूपयतु" इति आदिष्टवान्।

यदा रामः अग्रे पदं स्थापितवान् तदा तस्य



गमनं निवारयन् भीमः उक्तवान्- "महाप्रभो! एतस्य रामस्य स्वभावं भवान् न जानाति। अहं तु एतं बाल्यतः जानामि। एषः धैर्यशाली सर्वथा न। एषः भीत्या एव मातापित्रोः वचनानि अतिक्रम्य न व्यवहरति। गृहदायित्वनिर्वहणात् भीतः सन् भवतः समीपम् आगतवान्। इदानीम् अपि 'भवतः वचनं न अनुसरामि' इति वक्तुं भीतः सन् प्राणान् एव त्यक्तुं सिद्धः जातः। एषः यदि प्राणान् त्यजेत् तर्हि मम भगिन्याः का वा गतिः? प्रजानां पालकः राजा कदापि प्रजानां प्राणैः न क्रीडेत्। भवतः आस्थानस्य उद्योगं दूरतः एव नमस्करोमि अहम्। आवयोः इतः निर्गमनार्थम् अनुमतिं ददातु कृपया" इति।

भीमस्य वचनं श्रुत्वा मन्दहासं प्रकटयन् राजा अग्रे आगतवान्। अभिमानेन भीमस्य स्कन्धे हस्तं स्थापयित्वा – "वास्तविकः धैर्यशाली इदानीं मया दृष्टः। अद्य एव भवन्तं मम आस्थाने उद्योगे नियोजयामि। भवतः बन्धुः इत्यतः रामः अपि अत्र उद्योगं प्राप्स्यति" इति उक्तवान्।

वेतालः एवं कथां समाप्य अवदत्- "अये राजन्! रामस्य भीमस्य महाराजस्य च व्यवहारस्य कः अर्थः इत्येव मया न ज्ञातम्। रामः स्वभावतः धैर्यशाली न इति तु आरम्भतः एव ज्ञायते। तादृशः सः व्याघ्रस्य आहारः भवितुं कथं सिद्धः सञ्जातः? राजा प्रथमम् एतम् एव धैर्यशालिनम् उक्तवान्। अनन्तरं तु व्याघ्रेण सह युद्धं निराकृतवतः भीमस्य विषये विशेषादरं प्रदर्शितवान्। एतत् किमर्थम्? एतस्य सर्वस्य सन्देहस्य उत्तरं जानन् अपि भवान् यदि न वदेत् तर्हि सद्यः एव भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः मौनमुद्रां परित्यज्य उक्तवान्- "खड्गयोधप्रसङ्गतः राजप्रसङ्गपर्यन्तं सर्वत्र अपि रामस्य अधैर्यम् एव दृश्यते। वस्तुतः तु तस्य स्वतन्त्रबुद्धिः एव नास्ति। ज्येष्ठाः आत्मीयाः वा अधिकारवाण्या यत् कथयन्ति तदनुगुणं व्यवहरति सः। अतः एव राजाज्ञां धिक्कर्तुम् अशक्तः सः भीत्या व्याघ्रमुखं प्रवेष्टुं सिद्धः जातः। किन्तु भीमः तथा न। यत्र इच्छा नास्ति तादृशं कार्यं सः सधैर्यं निराकरोति। पश्यतु, सः राजाज्ञां न केवलं धिक्कृतवान्, अपि तु महाराजं नीतिं बोधयितुम् अपि धैर्येण उद्युक्तः। एतत् सर्वं परिशील्य एव राजा उक्तवान् यत् वास्तविकः धैर्यशाली अद्य मया दृष्टः इति। वस्तुतः भीमः प्रशंसार्हः" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः झटिति अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# निर्णयकौशलम्

सुवर्णगिरिराज्यं सुन्दरवर्मा नाम राजा पालयति स्म। सः धर्मपरायणः न्यायनिष्ठुरः च। 'असामान्यः विवेचनशीलः' इति तस्य प्रसिद्धिः अपि आसीत्।

निर्णयार्थम् आगताः सर्वाः अपि समस्याः सः स्वबुद्धिकौशलेन सम्यक् विविच्य समीचीनं मार्गम् आश्रित्य शीघ्रम् एव परिहरति स्म।

एकदा राजभटाः द्वौ पुरुषौ राजसमीपम् आनीतवन्तः। भटानां हस्ते एकः धनस्यूतः आसीत्।

'एतस्य स्यूतस्य विषये अनयोः महान् विवादः' इति निवेदितवन्तः ते।

सुन्दरवर्मा तौ परीक्षादृष्ट्या दृष्टवान्। 'अनयोः मध्ये वञ्चकः कः इति निर्णयः क्लेशकरः एव' इति ज्ञातवान् सः।

सुन्दरवर्मा क्षणकालम् आलोच्य मनसि एव किमपि निश्चित्य- "भवतोः मध्ये स्यूतस्य स्वामी कः इति मया ज्ञातम् इदानीम्। सः स्वामी आगत्य एतं स्यूतं नयतु" इति उक्तवान्।

तदा तयोः अन्यतरः आगत्य स्यूतं स्वीकृतवान्।

अन्यः चोरः इति निश्चयः जातः। महाराजेन यदा अधिकारवाण्या पृष्टं तदा सः स्वकीयं चोरत्वम् अङ्गीकृतवान् अपि। राजा तं कारागारे स्थापयितुम् आदिष्टवान्।

धनस्यूतस्य स्वामी महाराजं कृतज्ञतापूर्वकं नमस्कृत्य ततः निर्गतवान्। भटाः अपरं तं चोरं कारागारं नीतवन्तः।

सुन्दरवर्मणः न्यायनिर्णयक्रमं दृष्ट्वा न केवलं सभ्याः, मन्त्रिणः अपि आश्चर्यचकिताः।

मन्त्री राजानं पृष्टवान् - "प्रभो! तयोः मध्ये चोरः कः इति भवान् कथं ज्ञातवान्? यतः भवान् कमपि किमपि न पृष्टवान् एव

खलु?" इति।

"चोरस्य अभिज्ञानार्थं मया काचित् परीक्षा उपस्थापिता। धनस्यूतस्य विषये आसीत् खलु तयोः विवादः? 'यः स्यूतस्य स्वामी सः अग्रे आगत्य स्यूतं नयतु' इति मया यदा सूचितं तदा उभाभ्याम् अपि अग्रे आगन्तव्यम् आसीत्। किन्तु चोरः किञ्चित् बुद्धिमत्तां प्रदर्शितवान्। 'त्वरया अग्रे आगतवन्तं चोरं निश्चित्य स्यूतं मह्यं यच्छन्ति' इति तस्य अभिप्रायः आसीत्। अतः स्यूतस्य स्वामी निस्सङ्कोचम् अग्रे आगत्य स्यूतं स्वीकृतवान्" इति उक्तवान् राजा।

महाराजस्य विवरणेन मन्त्रिणः सभ्यानां वा तृप्तिः न जाता।

एतम् अंशं ज्ञात्वा सुन्दरवर्मा सभाम् एकवारम् दृष्ट्वा पृष्टवान्- "भवताम् इतोऽपि कोऽपि सन्देहः अवशिष्टः इव भाति" इति।

"आं महाप्रभो! अस्माकम् इतोऽपि समाधानं न जातम्। सभासदः अपि सन्देहात् न मुक्ताः" इति उक्तवान् मन्त्री।

राजा मन्दहासं प्रकटयन्- "कः सन्देहः सः? पृच्छन्तु। कस्मिन् अंशे सन्देहः भवताम्?" इति पृष्टवान्।

"भवतः तर्कः युक्तः एव इत्यत्र कः आधारः आसीत्? यः कारागारं प्रति प्रेषितः तस्यैव स्यूतः कुतः न स्यात्? भवतः निर्णयस्य साक्ष्याधारः कोऽपि नास्ति खलु?" इति पृष्टवान् मन्त्री।

"आं, भवान् युक्तम् एव प्रश्नं पृष्टवान्" इति उक्त्वा सुन्दरवर्मा क्षणकालानन्तरं पुनः उक्तवान्- "मया यः कारागारं प्रति प्रेषितः तस्यैव यदि स्यूतः स्यात् तर्हि सः आर्तस्वरेण आक्रन्दनम् अकरिष्यत्। यतः श्रमेण सम्पादितं धनं परहस्तगतं जायमानं दृष्ट्वा कोऽपि मौनं न तिष्ठति। सः वस्तुतः चोरः एव आसीत्। अतः एव 'मम चौर्यम् एतैः कथम् अपि ज्ञातम्' इति चिन्तयन् सः मौनं स्थितवान्" इति।

महाराजस्य विवरणेन सभ्याः मन्त्री च समाहिताः अभवन्। ते महाराजस्य निर्णयकौशलं मुक्तकण्ठेन श्लाघितवन्तः।



अस्माकं देशस्य वैशिष्ट्यानि

# अम्बरदुर्गम्

राजस्थानराज्ये जयपुरसमीपे अम्बरदुर्गम् अस्ति। पूर्वम् एतत् दुर्ग धुण्डारराज्यस्य राजधानी आसीत्। महोन्नताभिः भित्तिभिः, शिखरमण्डपैः, शिलास्तम्भैः, रहस्यमार्गैः च समेतम् एतत् अमृतशिलाभिः निर्मितं दुर्गं पर्वतस्य सानुप्रदेशे सगम्भीरं विराजते।






एतस्य प्रान्तस्य प्रथमशासकाः मीणा-वंशः शक्तिस्वरूपिणीम् अम्बादेवीम् आराधयन्ति स्म। अतः स च प्रदेशः 'अम्बावती' इति प्रसिद्धः जातः। कालान्तरे एतदेव नाम 'अम्बर्' इति रूपान्तरं प्राप्नोत्। सानुप्रदेशेषु दुराक्रमणकारिणः वशीकर्तुं यथा न शक्नुयुः तथा भवनानि निर्मितानि।

दशमे शतके ग्वालीयर्राज्ञी स्वकीयशिशोः रक्षणार्थं ग्रामीणस्त्रियः वेषं धृत्वा शिशुं कण्डोले संस्थाप्य अम्बरदुर्गं प्रति प्रस्थिता।





अम्बरसमीपस्थं खोगाप्रदेशं यदा सा प्राप्तवती तदा पिपासा बुभुक्षा च अधिका जाता। अतः सा शिरसि स्थापितं कण्डोलं तत्रैव शिलायाः उपरि संस्थाप्य फलानि आनेतुं गतवती। यदा प्रत्यागतं तदा तया दृष्टं यत् कश्चन सर्पः फणां प्रसार्य शिशवे छायां कल्पयति! राज्ञीं दृष्ट्वा सः सर्पः मन्दं ततः निरगच्छत्।

दूरात् एव एतत् दृश्यं दृष्ट्वा कश्चित् ब्राह्मणः उक्तवान् यत् एषः राजा भविष्यति इति। राज्ञी अम्बरराजस्य प्रासादे पाचिकास्थानं प्राप्तवती। तस्याः पाककौशलं दृष्ट्वा राजा तस्याः अभिज्ञानं प्राप्तवान्। तद्दिनतः सः तां भगिनीम् इव पश्यति स्म।





राज्ञ्याः कुमारः प्रवृद्धः सन् धोलाराय-नाम्ना तद्राज्यस्य सिंहासनम् आरूढवान्। किन्तु अल्पे एव काले मीणावंशीयाः तं मारितवन्तः। अनन्तरं तत् राज्यं बहवः शासितवन्तः। एतेषां काले अम्बरदुर्गं विशलतां प्राप्नोत्।

द्वितीयः जयसिंहः (१६९९-१७४५) जयपुरपट्टनं निर्मितवान्। तदेव तस्य राजधानी अभवत् च। मोगलशासकः षा अलं एकदा अम्बरदुर्गस्य उपरि आक्रमणं कृतवान्। जयसिंहष्य सैनिकाः मोगलसैनिकान् पराजितवन्तः।






मध्ययुगीयायाः भारतीय शिल्पकलायाः उदाहरणरूपेण स्थितस्य, जयपुरसमीपे सानुप्रदेशे व्याप्तस्य अम्बरदुर्गस्य वैशिष्ट्यानि तु अनेकानि। तेषु सूर्यकिरणान् कौमुदीं च प्रतिफलयितुं समर्थं सूर्यशाला-चन्द्रशालयोः द्वारं प्रधानम्।

पङ्क्तिरूपेण स्थितैः अमृतशिलानिर्मितैः स्तम्भैः सुशोभमानः, विशालः, चतुरस्राकारकः दिवान्-इ-आम् नामकः महामण्डपः जयसिंहेन निर्मितः। एतस्य भवनस्य सौन्दर्यं दृष्ट्वा षाजहान् चक्रवर्ती अपि असूयां प्राप्तवान् इति श्रूयते।





अम्बरदुर्गस्य वर्णरञ्जितः इतिहासः अस्ति। इदानीम् अपि प्रतिदिनम् अत्र सहस्रशः यात्रिकाः आगच्छन्ति। दुर्गस्य प्राङ्गणे गजयात्रार्थम् अपि व्यवस्था अस्ति। अस्माकं देशस्य अपूर्वेषु भवनेषु एतस्य दुर्गस्य विशिष्टं स्थानम् अस्ति।



# अदृष्टशाली

नार्वेदेशे कश्चन धनिकः निवसति स्म। तस्य उभौ पुत्रौ। समुद्रमध्यस्थः कश्चन द्वीपः एतस्य धनिकस्य अधीने आसीत्। ग्रीष्म-काले तदीयौ पुत्रौ तं द्वीपं गच्छतः, मीनग्रहणकार्यं कुरुतः च। तयोः वासार्थं तत्र एकं गृहम् अपि निर्मितम् आसीत्।

धनिकस्य ज्येष्ठः पुत्रः स्वभावेन गम्भीरः। तस्य मनसि स्थितं विचारम् अन्यः कोऽपि ज्ञातुं न शक्नोति।

द्वितीयस्य तु एतद्विरुद्धः स्वभावः। सः साहसकार्येषु अतीव आसक्तः। 'अहं स्वभावेन सरलः' इति सर्वदा वदति स्म सः। अपायं सम्मुखीकृत्य अपि साहसकार्येषु प्रवर्तते।

पितुः मरणानन्तरं पित्रार्जिता सम्पत्तिः पुत्रयोः वशे आगता। तस्य द्वीपस्य स्वामित्वम् अपि तयोः अधीनं जातम्। द्वीपस्य स्वामित्वे ताभ्यां विभागः न कृतः।

प्रतिवर्षं ग्रीष्मकाले तौ नौकाम् आरुह्य तं द्वीपं गच्छतः। तत्रैव कानिचन दिनानि स्थित्वा मीनग्रहणेन समयं ससन्तोषं यापयतः। वृष्टेः आरम्भः यदा भवति तदा तौ प्रत्यागच्छतः। शैत्यकाले कुब्जजातीयाः केचन तस्य द्वीपस्य उपयोगं स्वीकुर्वन्ति इति प्रतीतिः आसीत्।

एकदा तौ सहोदरौ द्वीपं गत्वा ग्रीष्मकालं समाप्य प्रत्यागतवन्तौ। किन्तु इदानीं पुनः गत्वा आगन्तव्यम् आपतितं, यतः कानिचन अत्यावश्यकानि वस्तूनि ताभ्यां तत्रैव त्यक्त्वा आगतम् आसीत्। अतः तौ पुनः अपि तं द्वीपं गतवन्तौ। यदा प्रत्यागमनं चिन्तितं तदा अन्धकारः व्याप्तः आसीत्।

तदा अग्रजः अनुजम् उक्तवान्- "अन्धकारे प्रयाणं मास्तु। रात्रौ झंझावातः उत्पद्येत इति भाति। श्वः प्रातः एव प्रयाणं भवतु" इति।

"नार्वेदेशस्य जानपदकथा"



"झंझावातस्य लक्षणम् एव नास्ति। वृथा भीतिः भवतः" इति उक्तवान् अनुजः।

"अहम् अतीव श्रान्तः। इदानीं मया प्रयाणं कर्तुं न शक्यते" इति प्रयाणं निराकृतवान् अग्रजः।

तस्यां रात्रौ तौ सहोदरौ तस्मिन् द्वीपे एव शयनं कृतवन्तौ। प्रातःकाले अनुजः यदा उत्तिष्ठति तदा अग्रजः तत्र नास्ति! नौका अपि न दृश्यते। आहारपदार्थाः भुषुण्डिका च दैववशात् तत्रैव आसन्।

'अग्रजः रात्रितः पूर्वं प्रत्यागच्छेत्' इति चिन्तयन् अनुजः मध्याह्ने पाकं कृत्वा भोजनं कृतवान्।

तद्दिनम् एवम् एव अतीतम्। सप्ताहः अपि अतीतः। 'मदीयः सम्पत्तिभागः अपि वशीकरणीयः इत्युद्देशेन एव अग्रजः अस्मिन् निर्जने द्वीपे माम् एकाकिनं त्यक्त्वा गतवान्' इति आलोचितवान् अनुजः।

वस्तुतः प्रवृत्तम् अपि तथैव। अग्रजः अपरतीरं प्राप्य नौकाम् अधोमुखतया नद्यां पातयित्वा 'अनुजः समुद्रे मज्जितः अभवत्' इति सर्वान् उक्तवान्।

अनुजः अग्रजस्य वञ्चनापूर्णव्यवहारेण न तथा खिन्नः। सः एकम् उडुपं निर्मितवान्। तस्य साहाय्येन मीनान् गृहीतवान्। भुषुण्डिकया पक्षिणः मारितवान्। एवं सः अल्पश्रमेण एव उदरं पूरयन् तस्मिन् एव द्वीपे निवसति स्म।

हेमन्तकालः आगतः। जनानां वचनं यदि सत्यं स्यात् तर्हि एषु दिनेषु वामनाः तं द्वीपम् आगच्छेयुः। 'ते वामनाः आगच्छन्तु नाम। जनानां सम्पर्केण मम कालः अपि विनोदेन गच्छेत्' इति चिन्तितवान् अनुजः।

शैत्यकालस्य एकस्मिन् सायङ्काले सुदूरात् समुद्रप्रदेशात् वाद्यसङ्गीतध्वनिः श्रुतः। शब्दं श्रुत्वा बहिः आगतः अनुजः शब्दस्य दिशि दृष्टिं प्रसारितवान्। एका नौका तत्र दृश्यते स्म। नौकातः प्रकाशः अपि प्रसरति स्म। नौकायाः रचना तेन इतः पूर्वं कुत्रापि न दृष्टा आसीत्। सुसूक्ष्मम् अवलोकनेन ज्ञातं यत् नौकायाः अरित्रस्य पार्श्वे काचित् तरुणी स्थिता अस्ति, तां परितः वर्णमयवेषधारिणः वामनाः सन्ति इति। सा स्त्री राजकुमारी इव दृश्यते स्म। सा या कापि भवतु नाम, तेषां वामनानां कुले

जाता तु न।

द्वीपं प्रति एव नौकायाः आगमनं ज्ञात्वा अनुजः त्वरया अन्तः प्रविष्टवान्। भुषुण्डिकां स्वीकृत्य गृहस्य अट्टम् आरुह्य निलीय सुप्तवान् च।

अचिरात् एव ते वामनाः द्वीपं प्राप्तवन्तः। गृहम् अपि प्रविष्टवन्तः। समग्रं गृहं तैः वामनैः व्याप्तं जातम्। अल्पे एव काले तत् गृहं ते राजभवनरूपेण अलङ्कृतवन्तः। इदानीं गृहे सर्वत्र रजतसुवर्णमयानि एव पात्राणि।

सर्वे वामनाः पङ्क्तौ उपविश्य भोजनं समापितवन्तः। भोजनानन्तरं तेषां नृत्यम् आरब्धम्। सा तरुणी एकत्र मौनम् उपविष्टा आसीत्। वामनानां राजा तां नृत्यार्थम् आह्वयन् तस्याः समीपं गतवान्। सा तस्य आह्वानं निराकृत्य कोपेन मुखं परिवृत्य उपविष्टवती।

अनुजः गवाक्षमार्गतः बहिः आगत्य समुद्रतीरं गतवान्। वामनानां नौकां रज्ज्वा दृढं बद्धवान्। पुनः गृहम् आगत्य द्वारे स्थित्वा अन्तः प्रचलत् नृत्यं क्षणकालं दृष्टवान्।

कोलाहलपूर्णम् एतत् नृत्यं समापयितुम् इच्छन् एकं गोलकं निरुद्देश्यं प्रयुक्तवान्। एतं शब्दं श्रुत्वा वामनाः दिग्भ्रान्ताः। भीत्या ते इतस्ततः धावितवन्तः। यदा नदीतीरं प्रति गतं तदा तैः नौका बद्धा दृष्टा। अतः ते पर्वतप्रदेशं प्रति धावितवन्तः।

गृहस्य अन्तः सा तरुणी सुवर्णमयानि



पात्रादीनि च आसन्। सा तरुणी अनुजाय स्वकीयां करुणकथां निवेदितवती।

यदा बालिका आसीत् तदा एव सा वामनैः अपहृता। वामानानाम् आचारव्यवहारात् सा अतीव जुगुप्सिता। अत्रान्तरे तेषां नायकः तां परिणेतुम् इच्छन् तदा तदा तां पीडयति। एतेन तस्याः जुगुप्सा द्विगुणिता जाता। गत्यन्तराभावात् तत्रैव तिष्ठन्ती 'कदा वा मम विमोचनं भवेत्' इति निरीक्षमाणा सा दिनानि यापयति स्म।

तस्याः नाम, ग्रामनाम, मातापित्रोः परिचयं च पृष्टवान् अनुजः। एतेन सः ज्ञातवान् यत् एषा परम्परया सम्बन्धिनी एव इति।

एषः अपि आत्मनः परिचयम् उक्तवान्। अनन्तरं तौ वामनानां नौकाम् एव आरुह्य

समुद्रम् अतिक्रम्य नगरं गतवन्तौ, तत्र सुखेन जीवितवन्तौ च।

अग्रजः कथञ्चित् अनुजस्य वार्ता ज्ञातवान् एव। मम अनुजः एव 'मत्तः अपि धनिकः जातः खलु!' इति असूयां प्राप्तवान् सः। एषा सम्पत्तिः वामनानां सहवासतः प्राप्ता इत्यपि तेन श्रुतम् आसीत्।

अनन्तरवर्षे पुनः अपि शैत्यकालः आगतः। अग्रजः दुराशाग्रस्तः सन् तं द्वीपं गतवान्।

यद्दिने सः द्वीपं प्राप्तवान् तद्दिने एव समुद्रतीरे प्रकाशः कोलाहलः च श्रुतः। भीतः अग्रजः गृहं प्रविश्य कोणे उपविष्टवान्।

अस्मिन् वर्षे तं द्वीपम् अन्यजातीयाः वामनाः आगतवन्तः। ते कृष्णवर्णीयाः। कटेः अधः चर्म धारयन्ति। ते नौकया न अगताः आसन्, अपि तु तरणं कृत्वा एव। यदा ते तत् गृहं प्रविष्टवन्तः तदा भीतः अग्रजः अट्टम् आरूढवान्।

आगतेषु कश्चित् मुखेन अग्निवर्षणं कृतवान्। तेन गृहस्थः अवकरराशिः अग्निना स्पृष्टः अभवत्। इतरे बहिः गत्वा तृणपर्णादीनि काष्ठानि च आनीय अग्नौ स्थापितवन्तः। तेन गृहे सर्वत्र धूमः व्याप्तः।

एतेन अट्टे उपविष्टस्य अग्रजस्य श्वासोच्छ्वासार्थं क्लेशः जातः। सः गवाक्षद्वारा निर्गन्तुं प्रयत्नं कृतवान्। किन्तु सः आकारेण स्थूलः। अर्धं शरीरं गवाक्षात् बहिः अस्ति। पुनः अर्धम् अन्तः एव अस्ति। स्थौल्यकारणतः शरीरम् अग्रे नेतुं न शक्यते। पृष्ठतः आनेतुम् अपि न शक्यते। सः उच्चैः आक्रन्दनं करोति। किन्तु तत् राक्षसानां कोलाहलकारणतः न श्रूयते एव।

प्रातःकालसमये ते वामनाः समुद्रं प्रविश्य तरन्तः निर्गतवन्तः। अग्रजः कथञ्चित् गवाक्षतः विमोचनं प्राप्य गृहम् आगतवान्। इदानीं तदीया मतिः तदधीने नास्ति। मतिभ्रष्टः सः इतस्ततः अटन् कुत्रापि गतवान्। अग्रजः न प्रत्यागतः इत्यतः तदीया सम्पत्तिः अनुजस्य एव जाता।





# उत्तररामायणम्

रामः शम्बूकवधं कृत्वा, अयोध्यां प्रत्यागत्य, भरतं, लक्ष्मणं च द्रष्टुम् इच्छन् तौ मत्समीपम् आनयतु इति द्वारपालकं सूचयित्वा, राजभवनस्य अन्तः गतवान्। अचिरात् एव भरतः लक्ष्मणः च रामस्य समीपम् आगत्य, सविनयं तं नमस्कृत्य, तस्य पुरतः स्थितवन्तौ।

रामः तौ उचितासनयोः उपवेश्य, "प्रियौ भ्रातरौ, यः राजा भवति सः प्रायः जानन् वा अजानन् वा तदा तदा कानिचन पापानि करोति। अतः सर्वविधपापानां परिहारसमर्थं राजसूययागं कर्तुम् इच्छामि अहम्। पूर्वं तावत् मित्रः चन्द्रः च राजसूययागं कृत्वा शाश्वतीं कीर्तिं सम्पादितवन्तौ। एतस्मिन् विषये भवन्तौ किं चिन्तयतः? भवतोः अभिप्रायः कः?" इति पृष्टवान्।

तस्य वचनं श्रुत्वा भरतः- "अग्रज, भवतः धर्मदृष्टौ वा कीर्तौ वा न्यूनता कथं वा स्यात्? किन्तु राजसूययागेन अनेके राजवंशाः निर्मूलाः भविष्यन्ति। महान् रक्तपातः भविष्यति। पौरुषातिशययुक्ताः अनेके राजानः मरिष्यन्ति। तथैव प्रजानाम् उपरि अपि अनकविधकष्टानि आपतिष्यन्ति। अतः भूमौ एतादृश्याः अनर्थपरम्परायाः संक्षोभस्य च कारणीभूतस्य राजसूययागस्य विचारः एव मास्तु" इति उक्तवान्।

भरतस्य अभिप्रायं रामः अङ्गीकृतवान्। एतादृशं समीचीनाभिप्रायं दत्तवन्तं तं श्लाघितवान्।

तदा लक्ष्मणः एवम् उक्तवान्- "अग्रज,

१२. अश्वमेधयागः



अश्वमेधनामकः यागः समस्तपापपरिहारकः इति श्रूयते। पुरा कदाचित् इन्द्रः केनचित् महापातकेन कलुषितः भूत्वा, बृहस्पतेः सहकारेण अश्वमेधमहायागं कृतवान्। तथा तद्द्वारा पापविमुक्तः अभवत् इति विचारं स्मरामि। अतः इदानीं वयम् अश्वमेधयागं कुर्मः चेत् तदेव युक्तम् इति प्रतिभाति।'' इति। अनन्तरं लक्ष्मणः तं वृत्तान्तम् अपि कथितवान्।

सः वृत्तान्तः एवंरूपः आसीत्। पूर्वकाले वृत्रनामकः महान् राक्षसः आसीत्। सः यद्यपि राक्षसः तथापि अतीव धर्मनिष्ठः आसीत्। तथैव ज्ञानी अपि। धर्मपरायणः सः लोकं प्रीत्या पश्यन् न्यायरीत्या राज्यपालनं कुर्वन् आसीत्। तस्य शासनसमये यथाकालं वृष्टिः भवति स्म। अल्पायासेन एव भूमौ सर्वाणि अपेक्षितवस्तूनि सिद्ध्यन्ति स्म। अतः सर्वत्र सर्वे जनाः सुखिनः सन्तुष्टाः तृप्ताः च आसन्।

एवं हि सति कदाचित् वृत्रः तपः आचरितुं सङ्कल्पितवान्। सः स्वीयं ज्येष्ठपुत्रं राज्यपालनकार्ये नियुज्य, अरण्यं गत्वा, तत्र अत्युग्रं तपः आचरितुम् आरब्धवान्। तस्य तादृशं तपः दृष्ट्वा भीतः देवेन्द्रः विष्णुमूर्तेः समीपं गत्वा- ''भोः देवाधिदेव, इदानीं महातपोमग्नः एषः वृत्रः इतः पूर्वम् एव त्रीन् अपि लोकान् जितवान् अस्ति। एतत् तपः समाप्येत चेत् सः अजेयः भविष्यति। अहं तु तं जेतुं सर्वथा असमर्थः भविष्यामि। अतः तस्य नाशं विना मम देवतानां च इदानीम् अन्यः मार्गः नास्ति। राक्षसानां बुद्धिः कदा कीदृशी स्यात् इति को वा जानाति? सर्वज्ञः भवान् एतत् सर्वं जानाति एव। इतः परं देवः एव प्रमाणम्'' इति प्रार्थितवान्।

इन्द्रस्य प्रार्थनां श्रुत्वा विष्णुमूर्तिः ''सः वृत्रः महात्मा अस्ति, मम मित्रं च। अतः अहं तं हन्तुं न इच्छामि। किन्तु भवतः अपेक्षा अपि न उपेक्षार्हा। अतः वृत्रासुरं हन्तुम् एकम् उपायं सूचयामि। मम शक्तिं त्रिधा विभज्य, प्रथमभागं भवतः शरीरे, द्वितीयं भागं भवतः वज्रायुधे, तृतीयं भूमौ च निक्षिपामि। तदा भवान् वृत्रं सलीलं हन्तुं शक्नोति'' इति उक्तवान्।

एतद्वचनं श्रुत्वा इन्द्रः देवताः च बहु आनन्दिताः। "अनुगृहीताः वयं देव!" इति उक्त्वा ते सर्वे ततः प्रस्थाय देदीप्यमानं तं वनभागं प्रविष्टवन्तः, यत्र वृत्रः तपः आचरन् आसीत्।



वृत्रस्य तीव्रतपसः ज्वालया त्रयः अपि लोकाः ज्वलन्तः इव भासन्ते स्म। तस्य दर्शनसमनन्तरम् एव देवतानां हृदयानि प्रकम्पितानि। अत्रान्तरे विष्णुना दत्तानां विशेषशक्तीनां स्मरणं प्राप्नुवन् इन्द्रः अपूर्वं धैर्यम् अवलम्ब्य, दृढं स्थित्वा, द्वाभ्याम् अपि हस्ताभ्यां गृहीतं वज्रायुधं उन्नीय वृत्रस्य शिरः प्रताडितवान्। तेन प्रहारेण तत्रत्या भूमिः छिद्रीभूय वृत्रं गिलितवती।

तथा भूमौ लीनः वृत्रः पुनः उपरि नैव उत्थितवान्। किन्तु तादृशमहापुरुषस्य वृत्रस्य हननेन इन्द्रः ब्रह्महत्यापातकदूषितः अभवत्। सः किञ्चित् चलितुम् अपि असमर्थः भूत्वा, तत्रैव कम्पमानः अचलः अतिष्ठत्।

तदा सर्वाः देवताः विष्णोः समीपं गत्वा, ब्रह्महत्यापातकतः इन्द्रं विमोचयितुं कञ्चित् उपायं सूचयितुं तं प्रार्थितवत्यः।

"इन्द्रः अश्वमेधयागं करोतु। सः ब्रह्महत्यादोषविमुक्तः भविष्यति। तेन सह इतरपापानि अपि नश्यन्ति" इति उक्तवान् विष्णुः।

तद्वचनं श्रुत्वा देवताः महता सन्तोषेण, बृहस्पत्यादिभिः सह इन्द्रस्य समीपं गतवत्यः। विष्णुमूर्तेः वचनं तं निवेदितवत्यः च। सङ्कल्पमात्रेण एव ब्रह्महत्यादोषः ततः दूरम् अपासरत्। अनन्तरं बृहस्पतेः साहाय्यं प्राप्य इन्द्रादिदेवताः अश्वमेधयागं श्रद्धया कृतवत्यः। ब्रह्महत्यापातकं सम्पूर्णरूपेण परिहृतम्। इन्द्रः पुनः पूर्ववत् अभवत्।

एवंरूपेण यदा लक्ष्मणः इन्द्रस्य वृत्तान्तं कथितवान्, तदा रामः अश्वमेधयागस्य महत्त्वकथनपरां अपरां कथाम् भरतलक्ष्मणौ कथितवान्।

पूर्वकाले कर्दमप्रजापतेः पुत्रः इलराजः बाह्लीकदेशं परिपालयन् आसीत्। तस्य विषये देवतानां, राक्षसानां, नागानां, यक्षाणां,



गन्धर्वाणां च महान् आदरभावः आसीत्।

एकस्मिन् चैत्रमासे इलमहाराजः स्वीयैः अनुचरजनैः सह मृगयार्थम् अरण्यप्रदेशं गतवान्। तत्र सः सहस्रशः मृगान् हत्वा राशीकृतवान्। तथापि तस्य मृगयाचापलस्य शमनं न अभवत्। अतः सः पुनः पुनः नूतनेन उत्साहेन मृगयामग्नः भूत्वा, धावतः मृगान् अनुसरन् युक्तायुक्तविवेकशून्यः जातः। एवं रीत्या धावन् सः कुमारस्वामिनः जन्मस्थानं प्रविष्टवान्।

तत्र पार्वतीपरमेश्वरौ प्रमथादिगणैः सह विहारमग्नौ आस्ताम्। पार्वतीपरमेश्वरयोः सन्निधानेन तत् स्थानं पवित्रीकृतम् आसीत्।

तस्य पर्वतप्रदेशस्य एकं वैशिष्ट्यम् एवम् आसीत् यत् तत्रत्याः सर्वविधप्राणिनः खगमृगादयः च स्त्रियः एव आसन्।

तत्र प्रविष्टाः इलमहाराजः तस्य भृत्याः च सपदि एव स्त्रीरूपाणि प्राप्तवन्तः। स्वीयशरीरे जातं परिवर्तनं दृष्ट्वा इलस्य भीतिः दुःखं च जातम्। सः शिवस्य समीपं गत्वा 'मां रक्षतु' इति सदैन्यं प्रार्थितवान्। तस्य प्रार्थनां पार्वती श्रुतवती।

पार्वती तस्य विचारे करुणावती भूत्वा शिवस्य अनुज्ञां प्राप्य, इलः एकस्मिन् मासे स्त्रीरूपम्, अन्यस्मिन् पुरुषरूपं च यथा प्राप्नुयात् तथा वरेण तं अनुगृहीतवती। किञ्च स्त्रीरूपसमये प्रवृत्तं वृत्तान्तं पुरुषरूपकाले यथा न स्मरेत् तथा अपि वरं दत्तवती।

इत्थम् इलः इला अभवत्। तथैव सर्वे भृत्याः स्त्रीरूपाणि प्राप्तवन्तः। ताः सर्वाः अपि तस्मिन् एव अरण्ये आसन्।

यस्मिन् पर्वतप्रदेशे एतत् सर्वं जातं, तस्य पर्वतस्य समीपे एकः सरोवरः आसीत्। तत्र चन्द्रस्य पुत्रः बुधः आश्रमं निर्माय तपः आचरन् आसीत्। तरुणः सः आकर्षकरूपवान् च। सः प्रदेशः अपि अतीव रमणीयः।

इला अन्यस्त्रियः च एकदा तं सरोवरं प्रविश्य तत्र महाकोलाहलं कुर्वत्यः जलक्रीडामग्नाः अभवन्। बुधः ताः दृष्टवान्। तासां मध्ये स्थितायाः इलायाः सौन्दर्येण सः आकृष्टः अभवत्। एतादृशी

अनुपमसुन्दरी त्रिषु लोकेषु कुत्रापि अन्या न स्यात् इति सः चिन्तितवान्। इलया सह स्थिताः काश्चन नारीः आश्रमं प्रति आहूय सः "सा का? किन्निमित्तम् एतम् अरण्यप्रदेशम् आगतवती? भवत्यः सर्वाः तस्याः सेविकाः स्युः खलु? सत्यं वृत्तान्तं वदन्तु" इति पृष्टवान्।

"आर्य, सा एव अस्माकं स्वामिनी। अस्माभिः सह अत्र आगत्य अटन्ती अस्ति। अरण्यं द्रष्टुम् आगता अस्ति। एतावत् एव वयं जानीमः। अन्यत् किमपि वयं न जानीमः" इति उक्तवत्यः ताः स्त्रियः।

"भवत्यः सर्वाः अपि एतस्मिन् आश्रमे स्थातुम् अर्हन्ति। कन्दमूलादिकं भक्षयन्त्यः अत्रैव स्थिरं तिष्ठन्तु। अरण्येषु व्यर्थम् अटनं मास्तु। तेन किमपि प्रयोजनं नास्ति। अत्रत्याः किंपुरुषाः भवतीनां भर्तारः भविष्यन्ति। भवत्यः सर्वाः अत्रैव सुखं तिष्ठन्तु" इति बुधः ताः उक्तवान्।

भृत्यस्त्रियः किमपि अनुक्त्वा ततः निर्गतवत्यः। तथा गतवत्यः ताः पुनः न प्रत्यागताः।

अनन्तरं बुधः इलाम्- "अहं चन्द्रस्य पुत्रः बुधः। भवत्याः परिस्थितिं दृष्ट्वा भवत्याः विषये मयि प्रीतिगौरवादयः उत्पन्नाः सन्ति। भवती अपि मम स्नेहम् इच्छति चेत् अत्र ससुखं स्थातुं शक्नोति" इति उक्तवान्।

"यथा भवते रोचते" इति उक्तवती इला।



उभौ अपि महता सन्तोषेण तं मासं यापितवन्तौ। द्वितीयमासस्य प्रथमदिवसे प्रातः इला इलमहाराजः अभवत्।

जातस्य वृत्तान्तस्य स्मरणं तस्य न आसीत्। तदा बुधः सवोवरे हस्तौ उपरि प्रसार्य ध्यानमग्नः आसीत्। इलः तं दृष्ट्वा "आर्य, अहं मम सैनिकैः सह एतं पर्वतप्रदेशं मृगयार्थम् आगतवान्। ते सर्वे कुत्र गतवन्तः इति न जानामि। किम् भवान् जानाति? तेषां का गतिः स्यात्?" पृष्टवान्।

"राजन्, अत्र शिलावृष्टिः अभवत्। तदा भवतः अनुचराः सर्वे मृताः। यथाकथञ्चित् भवान् एतस्मिन् आश्रमे रक्षितः। चिन्ता मास्तु। भवान् अत्र निश्चिन्ततया जीवितुं शक्नोति" इति उक्तवान् बुधः।



स्वीयाः अनुचराः सर्वे मृताः इति विचारं श्रुत्वा इलः दुःखितः भूत्वा- "इतः परं मम राज्यपालनस्य इच्छा नास्ति। भवता अनुज्ञा दीयते चेत्, अहं राजधानीं गत्वा मम ज्येष्टपुत्रं शतबिन्दुं पट्टाभिषिक्तं कृत्वा शीघ्रम् एव प्रत्यागमिष्यामि" इति उक्तवान्।

"इलमहाराज, किमर्थम् एतादृशी व्याकुलता? एकवर्षं यावत् अत्रैव तिष्ठतु। यथा भवतः कल्याणं भवति, तथा करोमि" इति उक्तवान् बुधः।

इलः तस्य वचनम् अङ्गीकृत्य तत्रैव स्थितवान्।

एकस्मिन् मासे स्त्रीरूपं, पुरुषरूपं च अन्यस्मिन् मासे प्राप्नुवन् इलः स्त्रीरूपधारणकाले गर्भवती भूत्वा एकं पुत्रं प्राप्तवान्।

अनन्तरं बुधः संवर्तः, च्यवनः, प्रमोदनः इत्यादीन् ऋषिजनान् आनाय्य, इलस्य वृत्तान्तं तेभ्यः निवेदितवान्। "एतस्य पूर्वावस्थाप्राप्त्यर्थं कमपि उपायं सूचयन्तु" इति तान् प्रार्थितवान्।

तस्मिन् एव समये इलस्य पिता कर्दमः 'स्वीय-पुत्रस्य कल्याणार्थम् अश्वमेधयागः एव परिहारमार्गः' इति सूचितवान्। सर्वे ऋषयः 'सत्यं सत्यम्' इति तस्य वचनम् अनुमोदितवन्तः।

अनन्तरं ते सर्वे सम्भूय अश्वमेधयागं कृत्वा, इलः पुनः स्त्रीरूपं यथा न प्राप्नुयात् तथा कृतवन्तः। यागस्य समाप्तिसमये साक्षात् ईश्वरः एव प्रत्यक्षीभूय इलमहाराजम् अनुगृहीतवान्।

इलः पुनः बाह्लीकदेशं न प्रतिगतवान्। मध्यप्रदेशे स्थितं प्रतिष्ठानपुरं पालयन् तत्रैव स्थितवान्। इलमहाराजस्य मरणानन्तरं बुधस्य पुत्रः पुरूरवाः प्रतिष्ठानपुरस्य राजा अभवत्।

रामः एतं वृत्तान्तं स्वीयभ्रातरौ कथयित्वा, लक्ष्मणं प्रेषयित्वा स्वीयपुरोहितौ वशिष्ठवामदेवौ, जाबालिः इत्यादीन् आनाय्य अश्वमेधयागसम्बन्धिनीं स्वीयाम् इच्छां तान् कथितवान्। तस्य वचनं श्रुतवतां तेषां सर्वेषाम् अपि महान् सन्तोषः अभवत्।

अश्वमेधयागं कर्तुं प्रयत्नाः आरब्धाः। तदर्थम् अपेक्षितानि वस्तूनि शीघ्रं शीघ्रं सङ्गृहीतानि।

किष्किन्धानगरे स्थिताय सुग्रीवाय, लङ्काराजाय विभीषणाय च अश्वमेध-यागार्थम् आह्वानं दातुं दूताः गतवन्तः। सर्वेभ्यः बन्धुभ्यः, इष्टमित्रेभ्यः च आह्वानपत्राणि प्रेषितानि। नानादेशेभ्यः ब्राह्मणाः,गायकाः, इत्यादयः कुटुम्बसहिताः आगतवन्तः। अनेके ऋषयः, नटाः, नाट्यकाराः, वाद्यकाराः इत्यादयः अयोध्यां सम्प्राप्तवन्तः।

नैमिकवने गोमतीनद्याः तीरे बृहती यज्ञशाला निर्मिता। अनेकसहस्रसङ्ख्याकेषु शकटेषु धान्योपधान्यादिकं, विविधपाकवस्तूनि, गन्धमकरन्दादयः रजतसुवर्णादयः च आनीताः। पाचकाः, शिल्पिनः च आगताः। रामस्य अन्तःपुरतः तस्य मातरः आगतवत्यः। सीतायाः सुवर्णमूर्तिं भरतः आनीय यज्ञशालायां स्थापितवान्।

यदा सर्वव्यवस्थाः कृताः, तदा रामः ऋत्विग्जनसहितम् एकं कृष्णवर्णीयम् अश्वं, तेन सह लक्ष्मणं च प्रेषितवान्।

यज्ञं द्रष्टुम् आगताः राजानः स्वराज्येभ्यः आनीतानि अमूल्यानि उपायनवस्तूनि रामाय समर्पितवन्तः। तेषां वसतिव्यवस्थादिकं भरतशत्रुघ्नौ पश्यन्तौ आस्ताम्।

ब्राह्मणानाम् आदरोपचारं सुग्रीवस्य वानराः, ऋषीणां सत्कारादिकं विभीषणस्य राक्षसाः कुर्वन्तः आसन्।

यज्ञः यथाविधि निर्विघ्नं च प्रचलन् आसीत्। कुत्रापि यस्य कस्यचित् अपि कापि न्यूनता न अभवत्। ये ये यत् यत् इच्छन्ति, तत् तत् ते प्राप्तवन्तः। एतादृशं यज्ञं पूर्वं इन्द्रः वा, कुबेरः वा, यमः वा कोऽपि न कृतवान् इति जनाः परस्परं वार्तालापसमये वदन्तः आसन्। वानराः राक्षसाः च सर्वदा कार्यमग्नाः आसन्। ते एव याचकेभ्यः सर्वेभ्यः दानं यच्छन्ति स्म। एवंरीत्या एकवर्षं यावत् प्रचलन् यज्ञः समाप्तः।



# क्लेषकरी चिकित्सा

'श्रेष्ठः वैद्यः' इति विख्यातस्य वीराचार्यस्य सकाशात् सरलाचार्यः नाम तरुणः वैद्यविद्यां अभ्यस्यन् आसीत्। एकदा सः गुरुं वीराचार्यं पृष्टवान्- "आचार्य! कीदृशस्य रोगिणः चिकित्सा अतीव क्लेशकरी? भवान् तु महान् अनुभवी। अनुभवबलात् भवान् एतत् चिकित्सारहस्यं जानीयात् एव" इति।

तदा वीराचार्यः उक्तवान्- "मूर्खाणां मन्दबुद्धीनां च चिकित्सा अतीव क्लेशाय। अनुभवबलात् दर्शनमात्रेण तादृशानाम् अभिज्ञानं प्राप्तव्यम्। तैः सह जागरूकतया व्यवहरणीयं च। यतः वयम् किमपि वदामः चेत् ते अन्यथा अर्थं कल्पयन्तः आपदं स्वागतीकुर्वन्ति। तेषां सदा विपरीतचिन्तनम्" इति।

अत्रान्तरे पामरोगस्य कारणतः कण्डूतिम् अनुभवन् पालकनामकः कश्चित् आगत्य उक्तवान्- "भोः, वैद्यमहोदय! गतवर्षे भवान् पीनसनिमित्तम् औषधं यच्छन् स्नानं न करोतु इति सूचितवान्। तदारभ्य स्नानं परित्यक्तवान् अहम्। तेन पीनसः अपगतः, किन्तु इदानीं..... तत्कारणतः महती कण्डूतिः च। असह्या बाधा एषा। एतस्मात् कण्टकतः माम् उद्धरतु" इति।

वीराचार्यः तस्मै औषधं दत्त्वा तं प्रेषितवान्। सरलाचार्यम् उक्तवान् च- "एषः पालकः मूर्खः मन्दबुद्धिः च। यावत् पीनसः न अपगच्छति तावत् स्नानं मास्तु इति तु मया उक्तम् एव। किन्तु एषः कदापि स्नानं न करणीयम् इति अर्थं कल्पितवान्। अतः एव 'एतादृशानां विषये जागरूकता भवतु' इति उक्तवान् अहम्" इति।





# वाणिज्यं स्नेहः च

सुरपुरग्रामे भूषणः नाम वणिक् निवसति स्म। सः तण्डुलवाणिज्येन उत्तमां कीर्तिं यथेष्टं सम्पत्तिं च सम्पादितवान् आसीत्। किन्तु सः कदापि अन्याय्यमार्गं न अनुसृतवान्। तेन यत् सम्पादितम् तत्सर्वं न्यायमार्गेण एव।

चन्द्रशेखरः भूषणस्य आत्मीयः स्नेहितः। सः अल्पायाम् एव कृषिभूमौ परिश्रमेण कार्यं कुर्वन् जीवननिर्वहणं करोति स्म।

चन्द्रशेखरस्य भूमिः देवमातृका। वृष्टिः समीचीनतया आगच्छति चेदेव कृषिः। अन्यथा कृषिः न शक्यते। केभ्यश्चित् वर्षेभ्यः तत्प्रदेशे वृष्टिः काले न आगच्छति स्म। वृष्ट्याधारितकृषेः कारणतः चन्द्रशेखरः प्रतिवर्षम् अपि पर्याप्तमात्रेण धान्यम् उत्पादयितुं न शक्नोति। अतः तस्य आर्थिकी परिस्थितिः विषमतां गता आसीत्।

'एषा कष्टकरी परिस्थितिः परिवर्तनीया एव' इति चिन्तयन् चन्द्रशेखरः एकदा भूषणस्य गृहं गतवान्। कुशलप्रश्नानन्तरं स्वकीयां कष्टदशां सविस्तरं निवेद्य चन्द्रशेखरः उक्तवान्- ''भूषण! अहं परिश्रमं कर्तुं सिद्धः अस्मि। किन्तु अनिश्चितवृष्टेः कारणतः अहं किमपि कर्तुं न शक्नोमि। कृषिम् अवलम्ब्य जीवनं कष्टकरम् एव जातम्। भवान् यदि अर्थसाहाय्यं कुर्यात् तर्हि अहं किमपि वाणिज्यम् आरब्धुं शक्नुयाम्'' इति।

''किं वाणिज्यं कर्तुम् इच्छति भवान्?'' इति पृष्टवान् भूषणः।

''तण्डुलवाणिज्यम् एव करिष्यामि'' इति उक्तवान् चन्द्रशेखरः।

''तण्डुलवाणिज्यं कुत्र कर्तुम् इच्छति?'' इति पुनः पृष्टवान् भूषणः।

"अस्माकं ग्रामे एव! कुत्र अन्यत्र कुर्याम्?" इति उक्तवान् चन्द्रशेखरः।

भूषणः क्षणकालं मौनं स्थित्वा किमपि आलोच्य- "चन्द्रशेखर! एषु दिनेषु वाणिज्ये लाभः एव नास्ति। यत् धनम् अस्ति तत् वाणिज्ये नियोजितम् अस्ति। अतः माम् अन्यथा न चिन्तयतु। सद्यः अहं किमपि साहाय्यं कर्तुं न शक्नोमि" इति उक्तवान्।

एतत् वचनं श्रुत्वा निराशः चन्द्रशेखरः दीर्घं निःश्वस्य स्वगृहं गतवान्।

केषाञ्चित् दिनानाम् अनन्तरं चन्द्रशेखरः अपरया समस्यया ग्रस्तः जातः। तस्य प्राप्तवयस्का एका पुत्री आसीत्। तस्याः निमित्तं वरः अपि अन्विष्टः आसीत्। किन्तु वरस्य मातापितरौ वदतः यत् दशसहस्रं रूप्यकाणि दत्तानि चेदेव विवाहः प्रचलेत् इति। ऋणात् अन्तरा अन्यः मार्गः नास्ति चन्द्रशेखरस्य पुरतः। "कं वा ऋणं पृच्छामि?" इति चिन्तयन् आसीत् सः।

तदा तस्य पत्नी सूचितवती- "आत्मीयं मित्रं भूषणम् एव पुनः एकवारं पृच्छतु" इति।

चन्द्रशेखरः भूषणं प्रष्टुं न इच्छति। यतः पूर्वतनः अनुभवः तस्य मनसि स्फुटः अस्ति। किन्तु अन्यमार्गस्य अभावात् सः भूषणं द्रष्टुं गतवान्।

पुत्र्याः विवाहविषये आगतां समस्यां चन्द्रशेखरः यदा निवेदितवान् तदा भूषणः- "एतदर्थं धनं प्रष्टुं किमर्थं भवतः सङ्कोचः? आत्मीयस्य भवतः पुत्री न अन्या। सा अपि मम पुत्री इव" इति उक्त्वा अन्तः गतवान्।



धनस्यूतं स्वीकृत्य बहिः आगत्य भूषणाय यच्छन्- "अत्र पञ्चदशसहस्रं रूप्यकाणि सन्ति, स्वीकरोतु" इति उक्तवान्।

"भूषण! अहं दशसहस्रं रूप्यकाणि केवलम् इच्छामि" इति उक्तवान् चन्द्रशेखरः।

"सत्यं, भवान् दशसहस्रं रूप्यकाणि एव पृष्टवान्। किन्तु तावत् धनं वरदक्षिणारूपेण दीयते खलु? पुनः इतरव्ययार्थं धनम् आवश्यकम् एव। एतानि पञ्चसहस्रं रूप्यकाणि भवता न प्रत्यर्पणीयानि। भवतः पुत्र्याः विवाहार्थं मदीयम् उपायनम् एतत्" इति तृप्त्या हसन् उक्तवान् भूषणः।

चन्द्रशेखरः मित्रस्य सामयिकं साहाय्यं कृतज्ञतापूर्वकं स्मरन् धनस्यूतेन सह गृहं प्रतिगतवान्।

एतत् सर्वं दृष्टवती भूषणस्य पत्नी पतिं पृष्टवती- "इतः पूर्वं चन्द्रशेखरः वाणिज्यार्थं प्रष्टुं यदा आगतवान् तदा भवान् साहाय्यं निराकृतवान्। इदानीं तु ऋणं दत्तम्, उपायनरूपेण अपि धनं दत्तम्। एतस्य व्यवहारस्य कः अर्थः?" इति।

"सः पूर्वं धनं यत् पृष्टवान् तत् वाणिज्य-निमित्तम्। सः तण्डुलवाणिज्यम् एव अस्मिन्नेव ग्रामे कर्तुम् इच्छति स्म। एतस्य अर्थः मम धनसाहाय्येन ममैव स्पर्धी भवति इति। एतत् ज्ञात्वा मम वाणिज्यबुद्धिः उपदेशम् अकरोत्-धनसाहाय्यं न करोतु इति। अतः तदा धनसाहाय्यं न कृतवान्" इति हसन् उक्तवान् भूषणः।

"इदानीं कथम् एतावती उदारता प्रदर्शिता?" इति आश्चर्येण पृष्टवती पत्नी।

"इदानीं तु स्नेहबुद्ध्या साहाय्यं कृतवान् अस्मि। स्नेहः अन्यः, वाणिज्यम् अन्यत्। चन्द्रशेखरः मम आत्मीयः स्नेहितः। यदि वाणिज्यार्थं साहाय्यम् अकरिष्यं तर्हि स्नेहः नष्टः अभविष्यत्" इति उक्तवान् भूषणः।

"वाणिज्ये इव लौकिकव्यवहारे अपि कुशलः भवान्" इति साभिमानम् उक्तवती भूषणस्य पत्नी।





# प्रत्युपकारः

## (७)

'यः सुधाकरं पराजयते, तम् एव अहं परिणेष्यामि' इति प्रियंवदा यद्दिने उक्तवती, तदनन्तरदिने एव जयविजयौ सुधाकरस्य समीपं गतवन्तौ। तं मल्लयुद्धार्थम् आहूतवन्तौ च।

सुधाकरः तौ दृष्ट्वा उक्तवान्- "मल्लयुद्धार्थम् एकैकशः आगन्तव्यम् इति तु क्रमः। अस्तु तावत्, भवन्तौ युगपद् एव आगन्तुम् इच्छतः चेत् तथैव भवतु। जयः मम एव इति तु निश्चितम्" इति।

उभौ अपि युगपत् एव सुधाकरस्य उपरि आक्रमणं कृतवन्तौ। एतेन अल्पे एव काले सुधाकरः पराजितः अभवत्। एतत् दृष्ट्वा सर्वे आश्चर्यचकिताः।

प्रियंवदा तु एतत् दृष्ट्वा चकिता दिग्भ्रान्ता च। 'सुधाकरः जयविजयौ अनायासेन पराजेष्यते' इति तस्याः विचारः आसीत्।

"आवां सुधाकरं सुलभतया पराजितवन्तौ। इदानीम् आवयोः मध्ये कं परिणेतुम् इच्छति भवती?" इति प्रियंवदां पृष्टवान् जयः।

"भवतोः मध्ये कः बलवान् इति अहं न ज्ञातवती। एषः अंशः प्रथमं स्पष्टं भवेत्। आवश्यकं चेत् भवन्तौ भवतोः पितरौ प्रष्टुम् अर्हतः" इति सूचितवती प्रियंवदा।

एतदनुगुणं जयविजयौ स्वमातापित्रोः समीपं गतवन्तौ। प्रियंवदायाः परिणये आसक्तिं संसूच्य समागतां समस्यां निवेदितवन्तौ च।

ग्रामज्येष्ठयोः अपि एषा समस्या एव। यतः प्रियंवदां परिणेतुम् उभौ अपि तीव्रम् इच्छतः। प्रियंवदायाः परिणयेच्छां त्यक्तुं कोऽपि न सिद्धः। ग्रामज्येष्ठौ बहुधा बोधितवन्तौ।



किन्तु तेन किमपि प्रयोजनं न सिद्धम्।

यथा यथा चर्चा प्रवृद्धा तदा ग्रामज्येष्ठयोः मध्ये एव विमतिः उत्पन्ना।

"अहं ज्येष्ठः। अतः मम पुत्रः जयः एव प्रियंवदां परिणयेत्" इति साभिमानम् उक्तवान् ज्येष्ठः।

"एतावत्पर्यत्तम् आवयोः मध्ये ज्येष्ठ-कनिष्ठभावः कदापि न उत्पन्नः। भवान् वयसा ज्येष्ठः स्यात्, किन्तु अहम् अपि स्थानेन गौरवेण च भवत्समानः एव। अतः भवदुक्तम् अङ्गीकर्तुम् अहं न सिद्धः" इति कनिष्ठः साग्रहम् उक्तवान्।

एवं विवादः किञ्चित्कालं प्रवृत्तः। तत्सन्दर्भे तयोः विवेकः अपि उदितः- "एतावत्पर्यन्तम् आवयोः मध्ये ऐकमत्यम् आसीत्। इदानीं प्रियंवदाकारणतः आवयोः कुटुम्बयोः मध्ये वैमनस्यम् उत्पन्नं खलु?"

'आवयोः मध्ये विवादम् उत्पादयितुम् एव सुधाकरः एतादृशं तन्त्रम् आश्रितवान् स्यात् वा?' इति कश्चन सन्देहः अपि तयोः मनसि उत्पन्नः। किन्तु एतस्य सन्देहस्य परिहारः ताभ्यां कथञ्चित् अपि न प्राप्तः।

अन्ते तौ सुधाकरसमीपम् एव गतवन्तौ। तयोः वचनं श्रुत्वा सुधाकरः उक्तवान्- "एतत् प्रकरणं प्रियंवदाकारणतः एव सम्पन्नम्। सा जयविजययोः मध्ये स्पर्धाभावं जागरितवती इत्यतः एषा परिस्थितिः। अत्र मम पात्रं किमपि नास्ति। अतः कं परिहारं सूचयितुं शक्नोमि अहम्?" इति।

तदा ज्येष्ठः ग्रामज्येष्ठः कोपेन उक्तवान्- "एतस्मिन् प्रकरणे प्रियंवदायाः पात्रता काऽपि नास्ति। यदि भवान् इच्छेत् तर्हि भवान् तौ पराजेतुं शक्नुयात्। भवान् उद्देशपूर्वकं पराजयम् अङ्गीकृतवान्। तयोः मध्ये कलहः उत्पादनीयः इति उद्देशेन भवान् एवं कृतवान्" इति।

सुधाकरः हस्ताभ्यां कर्णौ पिधाय- "शान्तं पापम्। जयविजययोः अन्योन्यतार्थम् अहं प्राणान् समर्पयितुम् अपि सिद्धः अस्मि। अहं कथं वा तयोः मध्ये कलहम् उत्पादयितुं शक्नुयाम्? भवतोः तु वृथा भ्रमः" इति उक्तवान्।

"एवं तर्हि भवान् कथं पराजयं प्राप्तवान्?

भवतः सामर्थ्यं तु अपूर्वं खलु?" इति पृष्टवन्तौ ग्रामज्येष्ठौ।

"अहं उद्देशपूर्वकं पराजयं न प्राप्तवान्। सामर्थ्ये न्यूनतायाः कारणतः एव मम पराजयः अभवत्" इति उक्तवान् सुधाकरः।

"सामर्थ्यस्य न्यूनता? महाकार्याणि कृतवतः भवतः सामर्थ्यं कुत्र वा गतम्?" इति पृष्ठवान् ज्येष्ठः।

"तद्विषये किं वदामि? इदानीं मयि कापि शक्तिः नास्ति। अत्र प्रियंवदा एव कारणम्। ग्रामम् आगतया तया अहम् अतीव आकृष्टः अभवम्। मदीयं मनः तस्याम् एव संलग्नम्। सा अपि मां दृष्ट्वा प्रीतिमती सती परिणयेच्छां प्रकटीकृतवती। तद्दिनतः सा परिणेतव्या इति स्वार्थभावना मयि उत्पन्ना। एवं स्वार्थस्य उदयात् मम शक्तयः सर्वथा लुप्ताः। 'अपकारिणः अपि उपकारः करणीयः' इति भावना मयि यावत् आसीत् तावत् भगवदनुग्रहः अपि आसीत्। किन्तु इदानीं स्वार्थभावना मयि जागर्ति। त्यागबुद्धिः सर्वथा नष्टा। भवतोः अनुमतिः यदि स्यात् तर्हि अहं प्रियंवदया सह एतं ग्रामं त्यक्त्वा कुत्रापि गच्छेयम्" इति उक्तवान् सुधाकरः।

एतस्य वचनस्य श्रवणेन ग्रामज्येष्ठयोः मुखे हृदये च किमपि परिवर्तनं जातम् इव।

"भवतः वचनं सत्यं वा? अपकारिणः अपि उपकारः करणीयः इति भावना यदि स्यात्



तर्हि अपूर्वाः शक्तयः सिध्यन्ति वा? किं भवतः वचनं विश्वासार्हम्?" इति सन्देहेन पृष्टवान् कनिष्ठः ग्रामज्येष्ठः।

"यदि सा भावना मनःपूर्वकम् इष्टा स्यात् तर्हि अपूर्वाः शक्तयः मनुष्येषु आवाहिताः भवन्ति इति तु सुनिश्चितम्। किन्तु एताः शक्तयः स्वार्थनिमित्तं न उपयोक्तव्याः। स्वार्थभावना आगता चेत् ताः शक्तयः सर्वथा नश्यन्ति" इति उक्तवान् सुधाकरः।

तदा ग्रामज्येष्ठौ सुधाकरं श्रद्धया प्रणम्य— "भोः भवान् वयसा कनिष्ठः चेदपि बुद्धिशक्त्या अस्मदपेक्षया ज्येष्ठः। एतावत्पर्यन्तम् आवाभ्याम् अनेकानि दुष्टकार्याणि कृतानि। इतः परं ग्रामीणानां हितार्थम् एव आवाभ्यां प्रयत्नः क्रियते" इति उक्तवन्तौ।



"तत् कथं शक्यते भोः? एकाम् एव उभौ अपि इच्छतः चेत् किं वा कर्तुं शक्यते?" इति असमाधानेन पृष्टवन्तौ ग्रामज्येष्ठौ।

"किमर्थं वा न शक्येत? पूर्वकाले एका एव पञ्चषान् न परिणीतवती वा? एवम् एव अहं जयः च प्रियंवदां परिणेष्यावः" इति उक्तवान् विजयः।

एतत् वचनं श्रुतवतोः ग्रामज्येष्ठयोः महत् असमाधानम्। तौ पुत्रौ कोपेन पश्यन्तौ उक्तवन्तौ- "भवतोः दुराग्रहः अधिकः जातः। आवां ज्येष्ठौ वदावः - एषः विवाहः सर्वथा न शक्यते। प्रियंवदा-सुधाकरयोः विवाहं निर्वर्त्य तौ इतः प्रेषयिष्यावः" इति।

एतत् श्रुत्वा जयः कोपेन- "भवद्भ्याम् उक्तं सर्वं यथावत् श्रोतुम् आवां मूर्खौ न। भवन्तौ तु वृद्धौ। भवतोः कालः अतीतः। इतः परं भवतोः स्थितिः गृहे एव। अद्य आरभ्य आवाम् एव ग्रामज्येष्ठौ" इति गर्जितवान्। विजयः एतत् अङ्गीकुर्वन् शिरः सञ्चालितवान्।

तद्दिने ग्रामे महत्परिवर्तनं जातम्। जयविजयौ मातरौ पितरौ, प्रियंवदां च गृहबन्धने स्थापितवन्तौ। ग्रामः तयोः शासनस्य अधीनः जातः। इदानीं तयोः स्वेच्छाचारस्य सीमा एव नास्ति।

सुधाकरः तयोः समीपं गत्वा- "यौ मातापितरौ भवन्तौ पोषितवन्तौ तौ भवद्भ्यां कारागारे स्थापितौ। या भवन्तौ न इच्छति

"भवतोः एतादृशं स्वभावपरिवर्तनं दृष्ट्वा अहम् अतीव सन्तुष्टः अस्मि। मम आगमनप्रयोजनम् इदानीं सिद्धम् इव। भवतोः अनुमतिः यदि स्यात् अहं प्रियंवदा च एतं ग्रामं त्यक्त्वा श्वः एव गच्छावः" इति उक्तवान् सुधाकरः।

एतत् अङ्गीकुर्वन्तौ तौ जयविजयौ स्वसमीपम् आहूय- "एषः सुधाकरः प्रियंवदां परिणेतुम् इष्टवान् इत्यतः एतस्यः शक्तयः नष्टाः। अतः भवद्भ्यां प्रियंवदा सर्वथा विस्मर्तव्या। एकस्याम् एव उभयोः आसक्तिः कलहकारिणी। एवं करणेनं भवतोः एव हानिः" इति उक्तवन्तौ।

"एतत् सर्वथा न शक्यते। प्रियंवदा आवश्यकी एव" इति उक्तवान् जयः।

ताम् अपि बन्धने स्थापितवन्तौ। एतत् सर्वथा अनुचितम्" इति नीतिं बोधितवान्।

"आवां विवेकं बोधयितुम् उद्युक्तः कः भवान्? भवान् सकुशलं त्यक्तः इति तु भाग्यम् इति भावयतु। सप्ताहाभ्यन्तरे भवान् इतः यदि न निर्गच्छेत् तर्हि भवतः प्राणाः निर्गताः भवेयुः। जागरूकः भवतु" इति कोपेन उक्तवन्तौ जयविजयौ।

सुधाकरः ततः निर्गत्य ग्रामस्थान् पृष्टवान्- "भवतां ग्रामस्य ज्येष्ठौ जय-विजययोः वशे बन्धने स्तः खलु? तयोः रक्षणं भवतां कर्तव्यं न वा?" इति।

तदा ग्रामस्थाः उक्तवन्तः- "अस्माकं ग्रामज्येष्ठौ एव उक्तवन्तौ यत् एतौ विष्णोः द्वारपालकयोः जयविजययोः अंशेन उत्पन्नौ इति। कलिपुरुषस्य अपेक्षानुगुणं तौ राक्षसबुद्ध्या उत्पन्नौ। अत्र वयं किं वा कर्तुं शक्नुयाम? अस्माकं पूर्वजन्मनः कर्मफलम् एतत्" इति।

"जयविजययोः पीडातः विमोचनं कथम् इति भवतां ग्रामज्येष्ठौ न उक्तवन्तौ वा?" इति पृष्टवान् सुधाकरः।

"सः श्रीमन्नारायणः एव अत्र अवतरिष्यति, तयोः पीडां निवारयिष्यति च इति ताभ्यां सूचितम्" इति उक्तवन्तः ग्रामस्थाः।

"सः श्रीमन्नारायणः अहम् एव। रामायणकालीयानां वानराणाम् अंशः भवत्सु अस्ति। प्रियंवदा साक्षात् लक्ष्मीः एव। जयविजयौ तां बन्धने स्थापितवन्तौ। यदि वयं सम्भूय प्रयत्नं कुर्याम तर्हि रक्तपातं विना एव जयविजयौ शरणागतौ भवतः। तदा एव भवन्तः अपि तयोः पीडातः विमुक्ताः भविष्यन्ति" इति उक्तवान् सुधाकरः।

"भवान् एव श्रीमन्नारायणः इति वयं कथं विश्वसिमः? ग्रामज्येष्ठौ तथा न उक्तवन्तौ खलु?" इति सन्देहं प्रकटितवन्तः ग्रामीणाः।

"मया सह आगच्छन्तु। तौ ग्रामज्येष्ठौ एव पृच्छाम" इति वदन् सुधाकरः सर्वैः सह ग्रामज्येष्ठयोः समीपं प्रस्थितवान्।

(अनुवर्तते)





# चतुरमतिः

पूर्वं चन्दनपुरे कश्चन दरिद्रः आसीत्। महता प्रयत्नेन अपि सः कुटुम्बनिर्वहणं कर्तुं न शक्नोति। अतः सः महाराजसमीपं गत्वा साहाय्यं प्रार्थितवान्।

महाराजः तस्य वचनं श्रुत्वा उक्तवान्- "भवतः पुरतः चतुरः प्रश्नान् उपस्थापयामि। सर्वापेक्षया वेगेन कः गच्छति? अतिशयेन बलवान् कः? सर्वापेक्षया मृदु किम्? महानन्ददायकं च किम्? श्वः सायङ्कालतः पूर्वम् एतेषां प्रश्नानाम् उत्तरं भवान् यदि वदेत् तर्हि अहं भवतः साहाय्यं निश्चयेन करिष्यामि" इति।

दरिद्रः तान् प्रश्नान् पुनः पुनः उच्चरन् गृहं गतवान्। सामान्यः सः तेषाम् उत्तरं न जानाति। पञ्चदशवर्षीया पुत्री कुशलानामिका पितरं पृष्टवती- "किं भोः, कस्याञ्चित् गाढालोचनायां मग्नः इति भाति भवान्?" इति।

"महाराजसमीपं साहाय्यम् इच्छन् गतवान्। महाराजः चतुरः प्रश्नान् श्रावयित्वा 'एतेषाम् उत्तरं श्वः सायङ्कालतः पूर्वं यदि वदेत् तर्हि साहाय्यं करिष्यामि' इति सूचितवान्। एतेषां प्रश्नानाम् उत्तरम् अहं किं जानामि?" इति खेदेन उक्तवान् सः निर्धनः।

तदा कुशला तान् प्रश्नान् पृष्ट्वा ज्ञात्वा उक्तवती- "एतदर्थम् एतावती चिन्ता किमर्थम्? सर्वापेक्षया वेगगामी वायुः। अतिशयेन बलवती भूमिः। यतः महाप्राणिनः, महावर्त्मानि, वृक्षादयः च भूमेः बलात् एव तिष्ठन्ति। सर्वापेक्षया मृदुः हस्तः। यतः हंसतूलिकातल्पे शयानः अपि हस्तं शिरसः अधः स्थापयति। महानन्ददायिनी तु निद्रा। तीव्राणि दुःखानि अपि निद्राकारणतः

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

एव विस्मृतानि भवन्ति। निद्रया नवचैतन्यं लभ्यते" इति।

पुत्र्याः उत्तरैः सन्तुष्टः सः निर्धनः अनन्तरदिने राजसमीपं गत्वा पुत्र्या उक्तानि उत्तराणि एव श्रावितवान्।

"एतानि उत्तराणि भवान् स्वबुद्धया वदति, उत कोऽपि एतानि भवते उक्तवान्?" इति पृष्टवान् राजा।

"मम तावत् चातुर्यं कुत्र? मम पुत्री एतानि उत्तराणि सूचितवती" इति मुग्धतया उक्तवान् निर्धनः।

"भवतः पुत्री तावच्चतुरा वा? तर्हि एतं तन्तुं भवतः पुत्र्यै दत्त्वा एकदिनाभ्यन्तरे एतदाधारेण पट्टवस्त्रं निर्माय दातव्यम् इति सूचयतु" इति उक्त्वा राजा तस्मै दशाङ्गुलमितं तन्तुं दत्तवान्।

निर्धनः चिन्तां कुर्वन् एव गृहं प्रत्यागतवान्। पितुः मुखं दृष्ट्वा पुत्री पृष्टवती- "भवतः उपरि महाराजस्य कृपादृष्टिः इतोऽपि न पतिता वा?" इति।

"तेन अन्या परीक्षा सूचिता अस्ति। एतस्य तन्तोः आधारेण एकदिनाभ्यन्तरे पट्टवस्त्रं निर्माय दातव्यम् इति वदति सः" इति उक्त्वा तस्यै तन्तुं प्रदर्शितवान्।

"तत्र किमर्थं चिन्ता? भवान् एकां काष्ठशलाकां नीत्वा महाराजाय दत्त्वा तेन एकं वेमानं निर्माय दातव्यम् इति वदतु। यदा वेमा सिध्यति तदा एव पट्टवस्त्रम् अपि सिध्येत्" इति उक्तवती पुत्री कुशला।



सः निर्धनः पुत्री यथा सूचितवती तथैव कृतवान्।

राजा क्षणकालं मौनं स्थितवान्। अनन्तरं सः उक्तवान्- "भवतः पुत्री महाचतुरा एव। अस्तु तावत्। भवते शतम् कुक्कुटाण्डानि दापयामि। श्वः सायङ्कालतः पूर्वं तेभ्यः शावकान् उत्पाद्य शावकाः अत्र प्रेषणीयाः इति तां वदतु" इति।

'किमिदं पुनः पुनः परीक्षा!' इति चिन्तयन् सः निर्धनः महाराजेन दापितानि कुक्कुटाण्डानि गृहं नीतवान्। पुत्री प्रवृत्तं सर्वं श्रुतवती। अनन्तरं तैः अण्डैः रुचिकरं सार-व्यञ्जनादिकं निर्माय पित्रे परिवेषितवती, स्वयं सन्तोषेण भुक्तवती च।

अनन्तरं सा पितरं सूचितवती- "तात!

महाराजसमीपं गत्वा वदतु यत् अण्डेभ्यः शावकाः उत्पन्नाः सन्ति इति। 'किन्तु ते इदानीम् आहारं न सेवन्ते। एकदिनाभ्यन्तरे एव उत्पन्नानि धान्यानि केवलं खादन्ति ते। अतः तादृशानि धान्यानि प्रेषणीयानि। अन्यथा सर्वे शावकाः मृताः भवेयुः' इत्यपि महाराजं वदतु भवान्'' इति।

निर्धनः पुत्र्याः वचनानि तथैव महाराजाय श्रावितवान्। तत् श्रुत्वा महाराजः उक्तवान्- ''भवान् इदानीं गृहं गच्छतु। 'महाराजः घण्टाद्वयाभ्यन्तरे द्रष्टुम् आगच्छति' इति भवतः पुत्रीं सूचयतु'' इति।

एतां वार्तां श्रुत्वा निर्धनपुत्री सा कुशला गृहं सम्यक् अलङ्कृतवती। द्वारप्रदेशे रङ्गवल्लीं लिखित्वा द्वारे तोरणं बद्धवती। अनन्तरम् आत्मानम् अपि अलङ्कृत्य महाराजस्य प्रतीक्षायां स्थितवती।

किञ्चित्कालानन्तरं महाराजः अश्वम् आरुह्य आगत्य तस्याः गृहस्य पुरतः अश्वं स्थगितवान्। किन्तु अश्वात् न अवतीर्णवान्। अश्वस्य खुरपुटध्वनिं श्रुत्वा बहिः आगन्तुम् उद्युक्ता कुशला अश्वस्य उपरि उपविष्टवन्तं महाराजं दृष्ट्वा तत्रैव स्थितवती। तस्याः एकः पादः देहल्याः बहिः अपरः देहल्याः अन्तः च आसीत्।

राजः कुशलां दृष्ट्वा पृष्टवान्- ''भद्रे! अहम् अश्वात् अवतीर्य भवत्याः गृहं प्रविशामि, उत एवम् एव इतः अग्रे गच्छामि?'' इति।

कुशलाहसन्ती उक्तवती- ''महाप्रभो! भवान् ज्येष्ठः, बुद्धिमान् च। व्यवहारज्ञानी अपि। अतः भवान् प्रथमं वदतु यत् अहम् अग्रिमपदं गृहात् बहिः स्थापयामि, उत अन्तः? एतस्य उत्तरं श्रुत्वा भवतः प्रश्नस्य उत्तरं वदामि अहम्'' इति।

राजा अतीव सन्तुष्टः अभवत्। अश्वात् अवतीर्य तस्मै निर्धनाय धनस्य एकं महास्यूतम् एव दत्तवान्। अनन्तरकाले तां कुशलां परिणीय महाराज्ञीस्थाने स्थापितवान् च।



## अक्टोपस् तरति वेगेन



अक्टोपस् नामकः जलचरः शिरसि स्थितस्य नलिकाकारकस्य अवयवस्य साहाय्येन जलधाराम् अग्रे नोदयन् अतिवेगेन पश्चाद्गत्या तरति। एषः जलचरः सदा इतरान् प्राणिनः दृढं गृहीत्वा तान् व्रणितान् करोति।

## जलं बाणम् इव प्रेरयति मीनः!

आग्नेय-एशिया देशे निवसन् जाति-विशेषे जातः मीनः तीरस्थे वृक्षे स्थितान् कीटान् उद्दिश्य मुखस्थं जलं बाणम् इव वेगेन प्रेरयति। एतेन प्रहारेण जले ये कीटाः पतन्ति तान् भक्षयन् जीवति एषः मीनः।





## आजीवितान्तं सख्यम्!

वीवर् जातीयः मूषकः सहचर्या सहयुक्तः सन्, सन्तानम् अभिवर्धयन् आजीवितान्तं सहचर्या सहैव बिले निवसति। इतरप्राणिनः इव एषः स्वसन्तानं न गृहात् निष्कासयति। पुत्राः एव प्राचीनबिलस्य समीपे एव स्वकीयं बिलं निर्माय स्वतन्त्रतया जीवन्ति।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अभिज्ञानम्– | Identity |
| अमृतशिला– | Marble |
| अरित्रम्– | Helm of a ship |
| अलाबु– | Bottlegourd |
| अवकरः– | Garbage |
| अहितुण्डिकः- | Snake charmer |
| आजीवितान्तं- | Till life's end |
| आशुकविता– | Extempore poetry |
| उडुपः- | Raft |
| उपायनम्– | Gift |
| कटः– | Mat |
| कटिः– | Waist |
| कण्डूतिः– | Scratching |
| कण्डोलः– | Basket |
| कम्पनम्- | Shivering |
| कुक्कुटाण्डम्– | Hen's egg |
| कौमुदी– | Moonlight |
| क्षान्तवान्– | Forgave |
| गवाक्षः– | Ventilator |
| गोलकः– | Bullet |
| तण्डुलः– | Rice |
| तन्तुः– | Thread |
| देवमातृका– | Dependant on rain water |
| देहली– | Threshold |
| पञ्जरम्– | Cage |
| पलितः- | Ripe |
| पश्चाद्गतिः- | Backward movement |
| पामरोगः– | Itch/Scabies |
| पिच्छम्– | Feather |
| पीनसः– | Chest cold |
| प्रतिभाति– | Appears |
| भुषुण्डिका– | Gun |
| मल्लयुद्धम्– | Wrestling |
| युगपत्– | Simultaneously |
| वाति– | Blows |
| विमतिः– | Difference of opinion |
| वेमा– | Loom |
| व्यञ्जनम्– | Curry |
| शलाका– | Stick (N) |
| शावकः– | Cub |
| सर्पणम्– | Crawling |
| सानुः– | Table-land |

* * * * *

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां नवम्बर-८७ मासे प्रकटयिष्यामः।





* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा सप्टम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः-

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावूमार्गः शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'जुलै' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् – **दुर्गमपथगमनम्।**

द्वितीयचित्रम्– **भविष्यति! भविष्यति!!**

प्रेषकः– पं. ओङ्कारः, द्वारा– बाबूलालपटेल्, राधामाधवमन्दिरम्, मानिकपुर, रायगढ (म.प्र.) ४९६५५१




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

# कथापुस्तकं पठन् अस्मि

माता- श्रीपाद! इतोऽपि किं करोति तत्र? रात्रेः द्वादशवादनम् अपि अतीतम्। दीपं निर्वाप्य शयनं करोतु।

Oh, Shripad! What are you doing? It's late in the night, it is 12 o' clock, switch off the light and go to bed.

श्रीपादः-अम्ब! पञ्चसु निमेषेषु दीपं निर्वापयामि।

Okay Mother! I will switch it off in five minutes.

मा- किं तत् महत्कार्यं प्रचलति तत्र?

What is it so important you are doing?

श्री- एकं कथापुस्तकं पठन् अस्मि अम्ब!

I am reading a story book, mother.

मा- कथापुस्तकपठनार्थं किं मध्यरात्रः एव समयः वा? समयः अपि व्यर्थः। आरोग्यस्यापि हानिः। विद्युतः व्ययः अपि।

Is midnight the only time to read a story book? It's wasting time, electricity and also not good for health!

श्री- बहु कुतूहलजनकम् अस्ति अम्ब एतत् पुस्तकम्।

This book is very interesting, mother.

मा- जानामि अहम्। अपराधान्वेषणपरं किमपि सामान्यं पुस्तकं स्यात् तत्। श्वः प्रातः उत्थाय पठतु। इदानीं दीपं निर्वापयतु।

I know, it must be an ordinary detective novel. Read it tomorrow morning. Now switch off the light.

श्री- श्वः प्रातः एव एतत् प्रत्यर्पणीयम् अस्ति। अतः समाप्य एव शयनं करोमि।

It must be returned tomorrow. So let me finish it and go to bed.

मा- प्रातः शीघ्रम् उत्थाय पठनं समाप्य प्रत्यर्पयतु।

Get up early in the morning, finish reading and return it.

श्री- कुतूहलजनके घट्टे प्रचलति पठनम्। अतः...

Now the story is at a very interesting stage, so .....

मा- भवान् दीपं निर्वापयति, उत अहम् एव आगत्य दीपं निर्वापयेयम्?

Will you switch off the light or shall I do it myself?

श्री- अम्ब! एतम् अध्यायं समाप्य निर्वापयिष्यामि। केवलं पञ्च पृष्ठानि पठनीयानि, तावदेव।

Mother! I will switch off the light after finishing this chapter. There are only five pages left, that is all.

# कथापुस्तकं पठन् अस्मि

माता- श्रीपाद! इतोऽपि किं करोति तत्र? रात्रेः द्वादशवादनम् अपि अतीतम्। दीपं निर्वाप्य शयनं करोतु।

Oh, Shripad! What are you doing? It's late in the night, it is 12 o' clock, switch off the light and go to bed.

श्रीपादः-अम्ब! पञ्चसु निमेषेषु दीपं निर्वापयामि।

Okay Mother! I will switch it off in five minutes.

मा- किं तत् महत्कार्यं प्रचलति तत्र?

What is it so important you are doing?

श्री- एकं कथापुस्तकं पठन् अस्मि अम्ब!

I am reading a story book, mother.

मा- कथापुस्तकपठनार्थं किं मध्यरात्रः एव समयः वा? समयः अपि व्यर्थः। आरोग्यस्यापि हानिः। विद्युतः व्ययः अपि।

Is midnight the only time to read a story book? It's wasting time, electricity and also not good for health!

श्री- बहु कुतूहलजनकम् अस्ति अम्ब एतत् पुस्तकम्।

This book is very interesting, mother.

मा- जानामि अहम्। अपराधान्वेषणपरं किमपि सामान्यं पुस्तकं स्यात् तत्। श्वः प्रातः उत्थाय पठतु। इदानीं दीपं निर्वापयतु।

I know, it must be an ordinary detective novel. Read it tomorrow morning. Now switch off the light.

श्री- श्वः प्रातः एव एतत् प्रत्यर्पणीयम् अस्ति। अतः समाप्य एव शयनं करोमि।

It must be returned tomorrow. So let me finish it and go to bed.

मा- प्रातः शीघ्रम् उत्थाय पठनं समाप्य प्रत्यर्पयतु।

Get up early in the morning, finish reading and return it.

श्री- कुतूहलजनके घट्टे प्रचलति पठतम्। अतः...

Now the story is at a very interesting stage, so .....

मा- भवान् दीपं निर्वापयति, उत अहम् एव आगत्य दीपं निर्वापयेयम्?

Will you switch off the light or shall I do it myself?

श्री- अम्ब! एतम् अध्यायं समाप्य निर्वापयिष्यामि। केवलं पञ्च पृष्ठानि पठनीयानि, तावदेव।

Mother! I will switch off the light after finishing this chapter. There are only five pages left, that is all.